॥ श्रीरस्तु ॥

# बडवानलः ।

( भट्टबलभद्रशर्मरचितसिद्धान्तसिद्धापगाखण्डनरूपः । )



श्रीमत्प्रतिवादिभयङ्करार्यसिंहासनाधीश्वरैः

श्रीकाञ्चीनगरनिवासिभिः

श्रीमद्—अनन्ताचार्यस्वामिभिः

विरचितः ।



तस्यायं प्रथमो भागः

मोहमय्यां निर्णयसागर मुद्रणालयेऽङ्कयित्वा प्रकाशितः ।

मोहमयी ।

१९१५.

श्रीरस्तु ।

श्रीहयग्रीवाय नमः ।

श्रीमते विष्वक्सेनाय नमः ।

# भूमिका ।

अतीतसाधारणवत्सरतुलामासषड्विंश(11-11-10) दिवसप्रकाशितायां मञ्जुभाषिण्यां **"शुद्धाद्वैतमतं वल्लभमतं वा"** इति शीर्षकादधः कोऽपि लेखो वल्लभमतीयाविकृतब्रह्मपरिणामवादविचारपरः प्रकाशितोऽस्माभिः । एतादृशास्तत्तन्मतसिद्धान्तानुशीलनपरा लेखास्तदातदा मञ्जुभाषिण्यामवतार्यन्तेऽस्माभिर्विदुषां मनोविनोदायेति स्फुटं मञ्जुभाषिणीवाचकानाम् । तद्वर्षीयेष्वेव पूर्वापराङ्केषु द्वैताद्वैतविशिष्टाद्वैतसम्प्रदायिनां तांस्तान्वादानधिकृत्य लेखाः प्रकाशिता द्रष्टुं शक्यन्ते । एतादृशानां लेखानां प्रकाशनं नाभ्यसूयया नवेर्ष्यया क्रियते, अपितु विदुषां मनोविनोदाय विद्यार्थिनां बुद्धिवैशद्याय च—इति विवेचकानां सुखावगमम् । तमपि लेखमत्राग्रे कार्त्स्न्येन लेखिष्यामः, यदीयशैलीदर्शनेनायमर्थः स्पष्टो भविष्यति विदुषाम् । तस्य खलु लेखस्यान्ते "समाधानमस्या नचिरात्केनापि वल्लभमतानुयायिना पण्डितेन प्रकशितं द्रष्टुमिच्छामः" इत्यपि लिखितं वर्तते ।

तस्यैतस्य लेखस्य खण्डने प्रवृत्तः श्रीमान् बलभद्रशर्मा नाम कोऽपि वल्लभमतानुयायी सिद्धान्तसिद्धापगां नाम कमपि प्रबन्धं बहूनां साहाय्येन जग्रन्थ, सहभूमिकया प्राचीकशच्चैनम् । सिद्धापगेयं कं पुनर्नेष्यति सहप्रवाहेण सागरमित्येकदा ग्रन्थमेनमालोकयन्तश्च वयं

नूनमदसीयं पाण्डित्याभिमानमेवेति निरचैष्म। अस्मदीयस्य लेखस्य भावमजानन्नेवायं खण्डनाभिनये प्रवृत्तो विदुषां हास्यास्पदतामेवात्मानमनैषीदित्युत्तरत्र व्यक्तीभविष्यति।

इदं पुनरस्माकं मनसः खेदाय भवति, यद्भावमजानन्नेवायं दोषानुद्भावयतीति। विदुषां खलु वर्तमानदोषाविष्करणेन न तथा खिद्यते चेतः, यथा खल्वसतो दोषस्योद्भावनेन। यथाह रघुनाथशिरोमणिः—

**"दूष्यं वचो मम पुनर्निपुणं विभाव्य**
**भावाववोधविहितो न दुनोति दोषः।"**

इति। अनधिकारप्रवेशश्चायमस्य महाशयस्य, यतोऽयं स्वयमेव कविः काव्यरत्नाकरश्चेत्युपाधिशब्दं प्रकाशयति। प्रसिद्धश्चायं श्लोकः प्राचाम्—

**"शास्त्रेण हीनाः कवयो भवन्ति**
**कवित्वहीनाश्च पुराणभट्टाः।"**

इति। अयमर्थश्चाग्रे व्यक्तीभविष्यति। वयं पुनरदसीयायाः सिद्धापगायाः संशोषणाय बडवानलमेनं समुद्भावयन्तो विदुषां पुरतोऽदसीयपाण्डित्यसर्वस्वं प्रकाशयिष्यामः केवलं नत्वयमिव शापाक्षरैः पूरयिष्यामो निबन्धम्। तदिह विवेचका विद्वांसः सत्पुरुषोचितेन स्वभावेन गुणग्रहणपरा भवन्त्विति प्रार्थयामः।

मञ्जुभाषिण्याः साधारणसंवत्सरतुलामासषड्विंशदिवसीयेऽङ्के प्रकाशितो लेख इत्थम्—

**"शुद्धाद्वैतमतं वल्लभमतं वा।"**

अस्ति शुद्धाद्वैतमतं नाम किमपीदानीमुत्तरभारते प्रचलितम्। इदमेव वल्लभमतमित्यप्युच्यते। तन्मतानुयायिनामयं सिद्धान्तः—यद्ब्रह्मैवेदं सर्वं परिदृश्यमानं जगत्, सर्वज्ञं सच्चिदानन्दरूपं ब्रह्मैव रमणार्थं जगद्रूपेण परिणमतीति।

ब्रह्मणो जगद्रूपेण परिणामे विकारित्वं स्यादित्याशङ्क्य, परिणामित्वेनाऽविकारित्वेन च श्रुतौ व्यपदेशात्परिणामित्वेऽप्यविकारं ब्रह्मेति ते प्राहुः। यथा सर्पः सरलः कुण्डलाकारश्च भवन्नप्यविकृतः, यथा वा सुवर्णं कटककुण्डलाद्याकारं भवदपि न विकृतं; तथा ब्रह्म जगदाकारं भवदप्यविकृतमिति दृष्टान्तद्वयप्रदर्शनेन तमिममर्थं साधयन्ति। यथा कामधेनुकल्पद्रुमादिभ्यो नानारूपाः पदार्था उत्पद्यमाना अपि न कामधेन्वादीनां विकृततां सम्पादयन्ति तथा ब्रह्मणोऽपि नानाकारं जगदिदमुत्पद्यमानमपि न ब्रह्मणो विकारमावहति, इति च वर्णयन्ति। "**उभयव्यपदेशात्त्वहिकुण्डलवत्**" इति सूत्रं चैतदर्थप्रतिपादकं मन्यन्ते। अत्रेदं वक्तव्यम्। यद्यपि सर्वज्ञं सर्वशक्तं ब्रह्म जगद्रूपेण परिणमतीति युक्तम्, "**बहु स्यां प्रजायेये**"ति ब्रह्मण एव जगद्रूपेण बहुभवनसङ्कल्पश्रवणात्, "**यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्।**" इत्यादिना एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानोपपादनप्रकरणे मृद्घटादिदृष्टान्तप्रदर्शनाच्च; तथापि ब्रह्मणो जगद्रूपेण परिणामाङ्गीकारेऽपि विकारित्वं यथा नापद्येत तथा परिणाम उपपादनीयः, न तु लोकदृष्टप्रक्रियाविरुद्धं विरुद्धधर्माश्रयत्वं ब्रह्मणोऽङ्गीकर्तव्यम्। श्रुतेः प्रत्यक्षविरुद्धार्थप्रतिपादकत्वेऽङ्गीक्रियमाणे सत्युन्मत्तप्रलपितत्वापत्तेः। यथा च ब्रह्मणो जगद्रूपेण परिणामाङ्गीकारेऽपि न विकृतत्वापत्तिस्तथा नामोपपादितं विशिष्टाद्वैतसिद्धान्तिभिः। चिदचिद्विशिष्टमीश्वरस्वरूपं ब्रह्मशब्दार्थस्तेषाम्। "चिदचिदीश्वरसमुदायरूपे ब्रह्मशब्दार्थे विशेष्यभूतेश्वरस्वरूपे साक्षात्परिणामो नास्ति, विशेषणभूताचिदंशे परिणामो भवति स च परम्परया ब्रह्मनिष्ठः। सद्वारकमपि परिणामित्वं मुख्यमेव। प्रोक्षणावहननादेर्व्रीहिद्वारा यज्ञशेषत्ववत्। एवं च सति ब्रह्मणो जगद्रूपेण परिणामप्रतिपादिकाः श्रुतयो विशेषणांशमादाय सद्वारकपरिणामपरतयोपपद्यन्ते, अविकारश्रुतयश्च ब्रह्मस्वरूपात्मकविशेष्यांशमादाय तत्र साक्षाद्विकाराभावप्रतिपादनपरतयोपपद्यन्ते" इति हि तेषां प्रक्रिया। ब्रह्मस्वरूपस्य साक्षात्परिणाममङ्गीकुर्वन्तो वाल्लभास्तु परिणामोऽविकृतत्वं चेत्युभयं ब्रह्मणः श्रुतिप्रतिपाद्यमिति तदुभयमपि तत्राङ्गीकुर्वन्तस्तयोर्विरुद्धयोरेकत्र समावेशं ब्रह्मणो वैभवरूपमलङ्कारं मन्यन्ते। यथा खल्वद्वैतिनोऽनुपपन्नतैकवेषाया अविद्याया अनुपपन्नतामलङ्कारं मन्यन्ते। अद्वैतिनां पक्षे च ब्रह्मणो नैवं विरुद्धधर्माश्रयत्वप्रसक्तिरस्ति, ब्रह्मणो जगदुपादानतामङ्गीकुर्वद्भिरपि

तैर्विवर्तोपादानताया एवाङ्गीकारात् । द्वैतिनां पक्षे तु ब्रह्मणो जगदुपादानताया एवाभावाद्विकारित्वप्रसङ्ग एव न भवति । वाल्लभानामेव पक्षेऽयं दोषः प्रसज्यते, यद्ब्रह्मणि परिणामित्वाविकारित्वयोर्विरुद्धधर्मयोः सामानाधिकरण्यं नाम । न खलु लोके साक्षात्परिणमन्नविकृतः कोपि पदार्थो दृष्टः । दृश्यते च परिणमतां विकारित्वं लोके । तत्—उभयमिदं परिणामित्वमविकारित्वं चेति परस्परविरुद्धतया लोके दृष्टं ब्रह्मणि परं कथं सामानाधिकरण्यं भजेत् ।

सर्पदृष्टान्तश्च विषमः, सर्पस्य सरलत्वं कुण्डलत्वं च सन्निवेशविशेषमात्रमेव, न तत्र परिणामः । न खलु कोपि सर्पं कुण्डलितं पश्यन्सर्पः कुण्डलतया परिणमतीति व्यवहरति । ऋज्वाकारकुण्डलाकारयोश्च कालभेदेनैकत्र सम्भवाद्विरोधोऽपि नास्ति । ब्रह्मणश्च परिणामोऽङ्गीक्रियते तैः, न सन्निवेशविशेषमात्रं जगद्ब्रह्मणः । परिणामाविकृतत्वयोश्च परस्परविरोधः पूर्वमुपपादितः ।

सुवर्णदृष्टान्तश्चासङ्गतः, सुवर्णस्य कटककुण्डलाद्यात्मना परिणामं भजतो विकारस्यैवाङ्गीकारात् । **"यथा सोम्यैकेन लोहमणिना सर्वं लोहमयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं लोहमित्येव सत्यम्"** इति छान्दोग्ये कटककुण्डलादीनां लोहविकारत्वश्रवणाद्ब्रह्मणोऽविकृतपरिणामांशे तस्य दृष्टान्तत्वासम्भवात् ।

कल्पद्रुम—कामधेन्वादीनामपि न प्रकृते दृष्टान्तत्वसम्भवः, कल्पद्रुमचिन्तामण्यादिभ्यो विचित्रतरपदार्थोत्पत्त्यङ्गीकारेऽपि कल्पद्रुमादिपरिणामाङ्गीकारस्यानावश्यकत्वात्, तेषां निमित्तमात्रतायास्तत्तत्पदार्थानां तत्तदुपादानद्रव्यपरिणामजन्यतायाश्चाङ्गीकारसम्भवात् । क्वचिदुत्पादकद्रव्यपरिणामजन्यत्वाङ्गीकारेऽपि वा कृत्स्नद्रव्यस्य विकारादर्शनेप्येकदेशविकाराङ्गीकारसम्भवाच्च । गोमयादिभ्यो विजातीयवृश्चिकाद्युत्पत्तिमङ्गीकुर्वन्तोऽपि गोमयैकदेशपरिणामजन्यत्वं तदंशमात्रस्य विकारं चाङ्गीकुर्वन्त्येव । तत्—कल्पद्रुमादीनामपि न दृष्टान्तता । **"उभयव्यपदेशा"**दित्यादिसूत्रं च ब्रह्मणो न विरुद्धधर्मवत्त्वाङ्गीकारे प्रमाणम्, तस्य पूर्वपक्षसूत्रतया तत्प्रतिपाद्यस्य सिद्धान्तरूपत्वाभावात् । **"उभयव्यपदेशात्त्वहिकुण्डलवत्"** इति सूत्रेण ब्रह्मणा सहाचिद्वस्तूनां तादात्म्य—भेदयोरुभयोर्व्यपदेशादहिकुण्डलन्यायेनाचिद्वस्तूनि ब्रह्मरूपाणीति पूर्वपक्षयित्वा, **"पूर्ववद्वा"** इति सूत्रेणाचिद्वस्तुनो जीववदेव ब्रह्मपदार्थैकदेशरूपत्वं सिद्धान्तितम् ।

यदि ब्रह्मणः परस्परं विरुद्धधर्माश्रयत्वमुपपद्यते, तर्हि भेदाभेदपक्षवादिना किमपराद्धम्? श्रुत्युक्तत्वाद्ब्रह्मणो विरुद्धधर्माश्रयत्वमङ्गीकुर्म इति वदतां च कोऽभिप्रायः स्यात्? न खलु यस्यकस्यचिदुक्तिमात्रेण परस्परासमानाधिकरणयोरेकाधिकरणवृत्तित्वं सम्भवितुमर्हति । तथात्वे च सति यस्यकस्याप्युक्त्या ह्रदस्य वह्नि-तदभावाश्रयत्वमपि स्यात् । वृक्षे वर्तमानयोः संयोगतदभावयोर्विरोधशमनायावच्छेदकभेदकल्पनं तार्किकाणामसङ्गतं स्यात् । श्रुतेरेवायं सर्वेतरविलक्षणो महिमेति चेत्? कृतं मीमांसाशास्त्रेण, सर्वत्रापि श्रुतिवैभवेन विरोधशमनसम्भवेन विचारशास्त्रस्यैवानर्थक्यात् । प्रत्यक्षविरुद्धस्य श्रुतिप्रतिपाद्यस्यार्थस्यादुष्टत्वे यूपादित्यैक्यप्रतिपादकशास्त्रस्यापि यथाश्रुतार्थकत्वाङ्गीकारे दोषाभावाद्दूत्यन्तरकल्पनं च व्यर्थं स्यात् । तस्माद्ब्रह्मण्यपि प्रत्यक्षविरुद्धं विरुद्धधर्मद्वयाधिकरणत्वं न श्रुतिः प्रतिपादयितुमलम् । तत्कथं नाम वाल्लभानां पक्षे ब्रह्मणः परिणामित्वाविकारित्वे उपपद्येताम्? इति महतीयं शङ्का समुदेति । समाधानमस्या नचिरात्केनापि वल्लभमतानुयायिना पण्डितेन प्रकाशितं द्रष्टुमिच्छामः ॥" इति ।

समाप्तेयं भूमिका ।

---

# भूमिकासमीक्षणम् ।

सिद्धान्तसिद्धापगायामादौ भूमिका काचित्पञ्चपृष्ठपरिमिता ग्रन्थकृता संयोजिता वर्तते । सा खलु ग्रन्थकर्तुः स्वभावमवगमयति स्फुटम्, तामधिकृत्य किमपि लिखामः ।

तत्र यत्तावदुक्तम्—

"अस्ति किल दक्षिणापथे विपश्चिदपश्चिमंमन्यः कोऽप्यनन्ताचार्यनामा रामानुजो यः काञ्चीमधिवसन्मञ्जुभाषिणीं नाम साप्ताहिकीं संस्कृतसंवादपत्रिकां प्रकाशमुपनयति । तत एव च सुदुर्लभसौभाग्यभाजनमिति, निरवधिधिषणावधीरितविबुधोपाध्याय इति, वाङ्मयमहाम्भोनिधिस्वैरविहारसाहसिक इति, सर्वातिशायिसमुच्छ्रयोन्मिपदशेषोत्कर्ष इति, सुधासूतिरिव लोकोत्सवोदयश्चण्डमरीचिरिव दुष्प्रधर्षप्रतापः पारावार इव दुस्तरतमो हंस इव च विदितविवेकवैदग्ध्य इति चाभिमन्यते य आत्मानम्।" इति ।

तदिदं "**अशक्तास्तत्पदं गन्तुं ततो निन्दां प्रकुर्वते ।**" इति न्यायं स्मारयति । मञ्जुभाषिणीं नाम साप्ताहिकीं संवादपत्रिकां प्रकाशयामो वयमित्येतन्नास्माकं दूषणाय, अपितु भूषणायैव भविष्यति । यत्तु तथातथा वयमभिमन्यामह इति, तदस्य परहृदयज्ञतामन्यादृशीं सूचयति । कथमिदमवगतं महाशयेनानेनेति तु प्रष्टुमिच्छामो वयम् । अस्मदीयलेखानुवाचनमात्रेणैतादृशोऽस्मदीयाभिमानोऽनेनाभ्यूह्यितश्चेत्काममयं दुरूहः स्यात् । नचैतावता सर्व एव तल्लेखवाचका एवमभ्यूहेरन्निति च वयं मन्यामहे । यत्तु महाशयेनानेनास्मद्दूषणप्रवृत्तेन शापाक्षराणि केवलं प्रयुञ्जता महानायासोऽङ्गीकृतः, सोयं प्रतिध्वनिमप्यनुत्पादयन्नूनं मोघतामुपगत इति ज्ञास्यन्ति पण्डिताः । स्वाधीनायामपि लेखनसामग्र्यामुपस्थितेष्वपि तादृशेषु शब्देषु न वयं तथाविधे कर्मणि प्रवर्तामहे ।

महता विस्तरेण स्वस्य काञ्चीगमनं, तत्र स्वागतानुष्ठानं, अन्यच्चान्यच्च विलिखन् भूमिकायां महाशयः श्रीदेवराजविद्यालये संमिलितैः पण्डितवर्यैः कृतानां प्रश्नानां "**द्वा सुपर्णा सयुजा सखायौ**" इत्यादिश्रुत्यर्थानुयोगस्य च पश्चाच्छब्देन स्वकृतप्रत्युत्तरणस्य लेखनं परं किमिति विस्मृतवानिति तु प्रष्टव्यं भवति ।

अन्ततश्च भूमिकयानया महाशयेनानेनात्मा लघुतामेव प्रापितो न पुनर्गौरवमिति सूचयन्तो विरमामोऽस्याः समीक्षणात् ।

**समाप्तं चेदं भूमिकासमीक्षणम् ।**

---

श्रीहयग्रीवाय नमः ।

श्रीमते विष्वक्सेनाय नमः ।

श्रीमते रामानुजाय नमः ।

# बडवानलः ।

तस्मै तुरङ्गममुखाय नमोस्तु धाम्ने
कस्मैचन स्फटिकशैलसमप्रभाय ।
हेषारवो भवति वेदमयो यदीयो
वाग्देवताप्रभृतयोऽपि च यद्विभूतिः ॥

करिशिखरिशिखरधाम्ने प्रणतार्तिनिवर्तनात्तदीक्षाय ।
अर्थिजनकल्पतरवे नमसां शतमस्तु देवराजाय ॥

गुरवे करवै नमांसि भूयां-
स्यथ रामानुजयोगिने च तस्मै ।
अवतीर्य यदात्मना हि शेषो
व्यतनोच्छेषमशेषमेव विष्णोः ॥

श्रीरामानुजयोगिसौम्यवरमुन्याज्ञाप्तसिंहासनै-
श्वर्यश्रीप्रतिवादिभीकरगुरोः सिंहासने संस्थितः ।
भट्टश्रीबलभद्रशर्मबहुलायासोत्थसिद्धापगा-
शोषार्थं बडवानलं रचयति श्रीमाननन्तो गुरुः ॥

तत्र यदुक्तं सिद्धापगायाम्—

"तत्र ब्रूमः, अहोनु खलु भोः प्रत्यक्षपक्षपातिता पण्डितपारीन्द्रस्य भवतो, यदुत सर्वप्रमाणमौलिमालतीमालां श्रुतिमपि प्रत्यक्षप्रमाणातीतमर्थमुपपादयन्तीं

नाम्युत्सहते सोढुम् । प्रत्युताऽऽपत्तिप्रदर्शनापदेशेन प्रमत्तानेव तामेतां व्यपदिशति । तदेष सुदुर्नीरसो भवतः स्वोक्तिभङ्गयेकगम्यो वेदस्याप्रामाण्यवादः" **इति।**

तदेतद्ग्रन्थकृतो भ्रान्तिमावेदयति । न खल्वस्माभिः प्रत्यक्षातीतमर्थं न प्रतिपादयति शास्त्रमित्युक्तं कुत्रापि, येन शास्त्रस्य प्रत्यक्षातीतार्थप्रतिपादकत्वमस्मदसंमतं ज्ञायेत । किंतु प्रत्यक्षाविरुद्धार्थप्रतिपादकत्वमात्रमुक्तमस्माभिः । नचाविरुद्धार्थप्रतिपादकत्वमतीतार्थाप्रतिपादकत्वं चैकम् । अतीतत्वं ह्यत्र तद्बोध्यत्वं—तज्जन्यबोधाविषयत्वरूपम् । नचेदमुभयं समनियतं वा, **चक्षुर्जन्यबोधाविषयस्पर्शादिरूपार्थप्रतिपादके**-शीतं जलं—इत्यादिशब्दे तदविरुद्धार्थप्रतिपादकतासत्त्वात् । नच तदतीतार्थप्रतिपादकत्वं तदविरुद्धार्थप्रतिपादकत्वेन विरुध्यते, येन प्रत्यक्षाविरुद्धार्थप्रतिपादकत्वकथनमात्रेण तदतीतार्थप्रतिपादकत्वाभावकथनं सिद्ध्येदपि ।

आपत्तिप्रदर्शनं च न स्वाभिप्रेतार्थप्रदर्शनरूपम् । आपत्तिर्हि परमते क्रियते—प्रत्यक्षविरुद्धार्थप्रतिपादकत्वाङ्गीकारे परमते वेदस्य प्रमत्तप्रलपितत्वापत्तिरिति । नच तावता स्वमते वेदस्याप्रामाण्यं प्रसज्येत । अविरोधसंपादनेन प्रामाण्यं हि वैदिकैः स्थापनीयं, तच्चास्मदीयैः स्थापितमेव । यद्यत्र घटः स्यात्तर्ह्युपलभ्येतेत्यापादयतो हि न भूतले घटवत्तानिश्चयः किंतु तदभावनिश्चय एव, भूतले घटाभाववत्तानिश्चयवानेव घटसद्भावं साधयन्तं परं प्रति यद्यत्र घटः स्यात्तर्ह्युपलभ्येतेत्यापत्तिं प्रदर्शयति । तर्कस्य विपर्यये तत्कोटिपर्यवसायित्वं च शास्त्रवित्संमतम् ।

प्रत्यक्षप्रमाणातीतत्वं च प्रत्यक्षजन्यबोधाविषयत्वम् । तच्च—स्वजन्यबोधविषयत्वसंबन्धावच्छिन्नप्रत्यक्षत्वावच्छिन्नप्रतियोगिताकाभाववत्त्वरूपं वा, विषयतासंबन्धावच्छिन्नप्रत्यक्षत्वावच्छिन्नाभाववत्त्वरूपं वा । अत्र द्वितीयपक्षे ब्रह्मणः स्वीयसर्वविषयकसाक्षात्कारविषयतां मुक्तानां

भगवत्संकल्पप्रयोज्यसर्वविषयकसाक्षात्कारविषयतां चादाय दोषवारणाय प्रत्यक्षे इन्द्रियजन्यत्वं विशेषणं देयम् । तत्रापि बहिरिन्द्रियजन्यत्वमेव निवेश्यं, तेन योगिनां योगबलजन्यं मनोमात्रकरणकं प्रत्यक्षमादाय न दोषः । इदं च ब्रह्मणो मुक्तानां च साक्षात्कारेषु प्रत्यक्षत्वमभ्युपेत्योक्तम् । यदि च ब्रह्मणो मुक्तानां च साक्षात्कारेषु प्रत्यक्षत्वमेव नास्ति, अक्षं प्रति=प्रत्यक्षमिति व्युत्पत्त्या प्रत्यक्षशब्दयोगलभ्यार्थस्य तत्राभावात्, इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षमिति नैयायिकाद्यभिमतप्रत्यक्षलक्षणानाक्रान्तत्वाच्चेति विभाव्यते; तदापि योगजप्रत्यक्षविषयतामादाय दोषवारणाय तन्निवेशनीयमेव । ब्रह्मणो मुक्तानां च ज्ञानेष्विन्द्रियोपयोगाभावस्य प्रमाणबलादङ्गीकारसंभवेऽपि योगिनां ज्ञानेष्वन्ततो मनइन्द्रियोपयोगस्य वाङ्गीकार्यत्वात्, प्रत्यक्षशब्दघटकीभूताक्षशब्दस्येन्द्रियमात्रपरत्वात् । वस्तुतस्तु प्रत्यक्षत्वसाक्षात्कारत्वादीनां विषयताविशेषरूपत्वात्, तस्य च **"अदृष्टो द्रष्टा" "पश्यत्यचक्षुः" "सदा पश्यन्ति" "सर्वं ह पश्यः पश्यति"** इत्यादिप्रमाणानुरोधेन भगवतः सर्वविषयकसाक्षात्कारे नित्यमुक्तानां साक्षात्कारेषु चावश्यकतया तद्विषयतामादायापि दोषवारणं तत्प्रयोजनं बोध्यम् । नित्यमुक्तादीनामप्राकृतेन्द्रियाङ्गीकारपक्षे च प्रत्यक्षे कर्मप्रयोज्यत्वमेव निवेशनीयम्, अस्मदादिप्रत्यक्षस्य परम्परया कर्मप्रयोज्यत्वान्नित्यमुक्तादीनां कर्मसंबन्धरहितत्वेन तत्प्रत्यक्षस्य तदप्रयोज्यत्वाच्चोपपत्तिः ।

तस्मात्प्रत्यक्षविरुद्धार्थाप्रतिपादकत्वं वेदस्य कथयतामस्माकं पक्षे तस्य प्रत्यक्षातीतार्थाप्रतिपादकत्वं वाऽप्रामाण्यं वा नैवापद्यत इति सिद्धम् ।

**यदुक्तम्**—"नच श्रुतेस्तदविरुद्धत्वविरुद्धत्वाभ्यां प्रामाण्याप्रामाण्यव्यवस्थितिं कुत्राप्युपलभामहे ।" **इति** ।

तत्, कस्यचिज्जन्मान्धस्य गहनगिरिगुहासु वसतः सूर्याभावव्याहारवदुपहास्यं; महर्षिणा जैमिनिना भाष्यकृदादिभिश्च वेदस्यापाततः प्रत्यक्षविरोधेनाप्रामाण्यमाशङ्क्य तदविरोधसंपादनेन प्रामाण्यस्य पूर्वमीमांसायां समर्थितत्वात् । यदि प्रमाणान्तरविरोधादिभिर्वेदस्याप्रामाण्यमेव नाशङ्कनीयं, यथाश्रुतशब्दलभ्यार्थ एव सर्वत्र यथायथमङ्गीकर्तव्यः, कृतं तर्हि मीमांसाशास्त्रेण कृत्स्नेन ! **“अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।”** इत्यादिना मीमांसान्यायविस्तरयोर्विद्यास्थानतया परिगणयिता महर्षिश्चोपहास्यकोटावन्तर्भाव्येत ।

पूर्वमीमांसायां प्रथमाध्याये द्वितीयपादे अर्थवादप्रामाण्याधिकरणे श्रुतेः प्रत्यक्षविरोधेनाप्रामाण्यमाशङ्क्य समाहितं जैमिनिना ।

**“शास्त्रदृष्टविरोधाच्च ।”**

इदं तस्याधिकरणस्य द्वितीयं सूत्रम् । अत्र **“स्तेनं मनोऽनृतवादिनी वाक्” “तस्माद्धूम एवाग्नेर्दिवा ददृशे नार्चिः, तस्मादर्चिरेवाग्नेर्नक्तं ददृशे न धूमः ।” “न चैतद्विद्मो वयं ब्राह्मणा वा स्मोऽब्राह्मणा वा”** इत्यादीनां श्रुतिवाक्यानामप्रामाण्यमनेन सूत्रेणाशङ्क्यते । प्रथमे पादे विध्यर्थवादमन्त्रनामधेयात्मकस्य कृत्स्नस्य वेदस्य प्रामाण्यमुक्तम् । विशेषतश्च विधिभागस्य प्रामाण्यं समर्थितम् । द्वितीये पादेऽर्थवादानां मन्त्राणां च प्रामाण्यं स्थाप्यते । तत्र प्रथमेऽर्थवादप्रामाण्याधिकरणेऽर्थवादानामप्रामाण्यमाशङ्क्य समाधीयते ।

**“आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते ।”** इति प्रथमेन सूत्रेण सामान्यतोऽर्थवादानां धर्मे प्रामाण्यासंभव उक्तः । अथ विशेषतश्च तदसंभवमुपपादयितुं प्रवृत्तोऽसूत्रयत्—**“शास्त्रदृष्टविरोधाच्च”** इति । शास्त्रविरोधात्, दृष्टविरो-

धात्, शास्त्रदृष्टविरोधाच्चार्थवादविशेषाणां स्वार्थे प्रामाण्यं न संभवतीति तदर्थः ।

**"स्तेनं मनः" "अनृतवादिनी वाक्"** इत्यादि श्रूयते । एषां वाक्यानां यदिभूतार्थानुवादित्वमात्रमङ्गीक्रियेत, तदा—**"आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्"**—इति पूर्वसूत्रोक्तमक्रियार्थत्वादप्रामाण्यमापद्येत । अथ तत्परिहारार्थं यथाकथंचिद्विपरिणामादिभिर्विधौ कल्प्यमाने—अयमर्थः समापद्यते—स्तेनं कर्तव्यं, मृषोद्यं कर्तव्यं, इति; तच्च शास्त्रविरुद्धम्, **"नचोरयेत्," "नानृतं वदेत्"** इति तयोर्निषेधात् । अतः शास्त्रविरोधादप्रमाणान्येवंजातीयकानि वाक्यानि, इति पूर्वपक्षः ।

**"तस्माद्धूम एवाग्नेर्दिवा ददृशे नार्चिः" "तस्मादर्चिरेवाग्नेर्नक्तं ददृशे न धूमः"** इति श्रूयते । अत्र च दिवा धूममात्रस्य दर्शनं रात्रावर्चिष एव दर्शनं प्रतिपाद्यते, दिवार्चिषोऽदर्शनं रात्रौ धूमस्यादर्शनं चोच्यते, दृश्यते च धूमोऽर्चिश्चेति द्वयमपि दिवारात्रौ च, अतः प्रत्यक्षविरुद्धमिदम्, तन्न प्रमाणं स्वार्थे, इत्यपरः पूर्वपक्षः

**"न चैतद्विद्मो वयं ब्राह्मणा वा स्मः—अब्राह्मणा वा"** इति श्रूयते । ब्राह्मणत्वाब्राह्मणत्वसंशयकथनेन ब्राह्मणत्वानिश्चयप्रतिपादकमिदं वचनम् । गृह्यते च दर्शनस्मरणपारम्पर्यानुगृहीतेन प्रत्यक्षेण ब्राह्मणत्वम् । न खलु लोके कोऽपि स्वगतं ब्राह्मणत्वं सन्दिहानो दृष्टः । तस्मात्प्रत्यक्षविरुद्धत्वादियं श्रुतिरप्रमाणम्, इत्यन्यः पूर्वपक्षः ।

**"को हि तद्वेद यदमुष्मिन् लोकेऽस्ति वा न वा"** इति श्रूयते । स्वर्गसंशयपरमिदं वाक्यम् । एतच्च **"स्वर्गकामो यजेत"**

इत्यादिशास्त्रदृष्टविरुद्धम्, तत्र हि स्वर्गपदेन स्वर्गसद्भावो ज्ञायते, तत्—इयं श्रुतिरप्रमाणम्, इतीतरः पूर्वपक्षः ।

अत्र दृष्टविरोधोपपादनपरं शाबरमित्थम्—"अथ दृष्टविरोधः—'तस्माद्धूम एवाग्नेर्दिवा ददृशे नार्चिः । तस्मादर्चिरेवाग्नेर्नक्तं ददृशे न धूमः' इति । 'अस्माल्लोकादुत्क्रम्याग्निरादित्यं गतः, रात्रावादित्यस्तम्' इत्येतदुपपादयितुमिदम् । उभयमपि दृष्टविरुद्धमुच्यते । तस्मान्नैषावधारणा सिद्ध्यतीति । अपरो दृष्टविरोधः—'न चैतद्विद्मो वयं ब्राह्मणा वा स्मः—अब्राह्मणा वा' इति । अक्रियार्थत्वादनर्थकम् । अथायमर्थः—नैवैतज्ज्ञायते किं वा ब्राह्मणा वयम्—उताब्राह्मणा एवेति, प्रत्यक्षविरुद्धमप्रमाणम् ।—"इति ।

अत्र वार्तिकम्—"रात्रिंदिवं धूमार्चिषोरपि दर्शनाद्धूम एवार्चिरेवेति चैतद्द्वयमपि प्रत्यक्षविरोधादवधारणं न संभवति । अथवा—यदनेन प्रतिपाद्यते 'दिवाग्निरादित्यमनुप्रविशति रात्रावादित्यस्तम्' इति, तदवधारणं नोपपद्यते, पूर्वोक्तस्य ष्वप्रतिपादनाय । ततश्चाग्निसूर्ययोर्नक्तंदिवं व्यवस्थितज्योतिष्वप्रतिपादनस्य स्तुतिरप्यसत्यत्वान्नावकल्पत इत्येषा वानवधारणा । अथवा—'सूर्यो ज्योति'रिति प्रातरयं मन्त्रः 'अग्निर्ज्योति'रित्येष सायम्,—इत्येषा मन्त्रयोरवधारणा न सिद्ध्यति । अथवा—समस्तो वेदः प्रमाणमित्येषावधारणा न सिद्ध्यति । इत्यभिप्रायः । शास्त्रविरोधो दृष्टविरोधद्वयं पुनः शास्त्रदृष्टविरोध इति यत्सदृशन्यायानि सन्ति क्रमभेदेन चोद्यन्ते, तत्परिहारस्तत्रक्रमभेदानुरोधेन । 'न चैतद्विद्म' इत्यार्षेयवरणशेषोऽभिमतः ।

सचायं क्रियातत्सम्बन्ध्यनभिधानात्तद्विषयत्वेनाप्रमाणम् । नहि ब्राह्मणत्वाज्ञानसन्देहविपर्य्ययाः केनचिदंशेन कर्मण्युपयुज्यन्ते । नच प्रत्यक्षविरुद्धा स्तुतिः सम्भवति । नच स्वतन्त्रब्राह्मणत्वाज्ञानप्रतिपादनेन प्रामाण्यम् । कथं पुनरयं दृष्टविरोधो, यदा समानाकारेषु पिण्डेषु ब्राह्मणत्वादिविभागः शास्त्रेणैव निश्चीयते? नायं शास्त्रविषयो, लोकप्रसिद्धत्वात्, वृक्षत्वादिवत् । कथं पुनरिदं लोकस्य प्रसिद्धम्? प्रत्यक्षेणेति ब्रूमः । कस्मात्पुनर्मातापितुः सम्बन्धानभिज्ञाश्चक्षुःसन्निकृष्टेषु मनुष्येष्वनाख्यातं न प्रतिपद्यन्ते? शक्त्यभावात् । यथा—वृक्षत्वं प्रागभिधानव्युत्पत्तेः । नैतत्तुल्यम्, वृक्षत्वं प्रागभिधायकव्यापाराज्जात्यन्तरव्यवच्छिन्नं स्वव्यक्तिष्वनुगतं शाखादिमद्रूपेण दृश्यते, नतु ब्राह्मणत्वम्; अपिच व्युत्पन्नशब्दोऽपि निमित्तान्तरादृते नैव प्रतिपद्यते; न चोपवीताध्ययनादिनिमित्तम्, वर्णत्रयसाधारणत्वात्; अध्यापनाद्यपि भिन्नाचारक्षत्रियवैश्यप्रतियोगित्वात्सन्दिग्धम्; सर्वं च दुष्टशूद्रेषु सम्भाव्यमानत्वादनिश्चितम्; यस्त्वविचारितसिद्धमेव प्रतिपद्येत, स शुक्तिकामपि रजतं मन्यमानः क्रीणीयात् । नैष दोषः—कचिद्धि काचिज्जातिग्रहणे इतिकर्तव्यता भवतीति वर्णितमेतत्,तेन यथैवालोकेन्द्रियादेकापञ्जानुपूर्वीशब्दस्मरणव्यक्तिमहत्त्वसन्निकर्षाकारविशेषादयोऽन्यजातिग्रहणे कारणं तथैवात्रोत्पादकजातिस्मरणम् । अयं चोत्पाद्योत्पादकसम्बन्धो मातुरेव प्रत्यक्षः, अन्येषां त्वनुमानाप्तोपदेशाद्यवगतः कारणं भवति । न चावश्यं प्रत्यक्षावगतमेव प्रत्यक्षनिमित्तं भवति, चक्षु-

रादेरनवगतस्यापि निमित्तत्वदर्शनात्। आन्तरालिकस्मृतिव्यव-हितमपि चेन्द्रियसम्बन्धानुसारि प्रत्यक्षमित्येतत्साधितम्। नच यत्सहसा सर्वस्य प्रत्यक्षं न भवति तन्निपुणतोऽपि पश्यतां न प्रत्यक्षमित्येतदप्युक्तमेव । स्त्र्यपराधात्तु दुर्ज्ञानोयं सम्बन्ध इति स्वयमेव वक्ष्यति । नच तावन्मात्रेण प्रत्यक्षता हीयते । नहि यद्गिरिशृङ्गमारुह्य गृह्यते तदप्रत्यक्षम् । नच स्त्रीणां कचिद्व्य-भिचारदर्शनात्सर्वत्रैव कल्पना युक्ता, लोकविरुद्धानुमानास-म्भवात् । विशिष्टेन हि प्रयत्नेन महाकुलीनाः परिरक्षन्त्यात्मा-नम् । अनेनैव हेतुना राजभिर्ब्राह्मणैश्च स्वपितृपितामहादिपार-म्पर्याविस्मरणार्थं समूहलेख्यानि प्रवर्तितानि । तथाच प्रति-कुलं गुणदोषस्मरणात्तदनुरूपाः प्रवृत्तिनिवृत्तयो दृश्यन्ते । नच भर्तृव्यतिरेककृतेन वर्णसङ्करोऽपराधेन जायते । दृश्यते ह्यपराधिनीनामपि स्वभर्तृनिमित्तः प्रसवः । तदपराधनि-मित्तस्तु तासामशुभफलोपभोगो भवेन्नत्वपत्यानां वर्ण-सङ्करः । नच नियोगतो वर्णान्तरैरेव सह प्रमादः । सवर्णेन चोत्पादितस्य नैव वर्णान्तरत्वापत्तिः । सङ्करजातानामपि च पुनरुत्कर्षापकर्षाभ्यां सप्तमे पञ्चमे वाऽन्यतरवर्णापत्तिः स्मर्यते। तत्र त्वेतावन्मात्रमागमिकं प्रत्येतव्यम्। न ह्ययं पुरुषेयत्तानियमो लौकिकप्रमाणगम्यः । तस्मात्सत्यपि सारूप्ये यथा केनचिन्नि-मित्तेन स्त्रीपुंस्कोकिलादिविभागज्ञानं तथैव दर्शनस्मरणपार-म्पर्यानुगृहीतप्रत्यक्षगम्यानि ब्राह्मणत्वादीनि; इति भवत्यज्ञा-नवचनस्य प्रत्यक्षविरोधः ।"—इति ।

धूमार्चिषोरुभयोरपि रात्रौ दिवा चेति कालद्वयेपि दर्शनादेकैकस्य

केवलमेकैकस्मिन्काले सावधारणं दर्शनं प्रतिपादयच्छ्रौतं वाक्यमप्रमाणम्, प्रत्यक्षविरोधात्, इति; तथा ब्राह्मण्यजातेः प्रत्यक्षेण गृह्यमाणत्वात्तदनिश्चयप्रतिपादनपरं श्रौतं वाक्यं चाप्रमाणम्, प्रत्यक्षविरोधात्; इति च प्रत्यक्षविरोधेन श्रुतेरप्रामाण्याशङ्कापरमिदं सूत्रमिति भाष्यवार्तिकयोरुपर्युदाहृतयोः स्पष्टम् । वार्तिके **"कथं पुनरयं दृष्टविरोधः"** इत्यादिः— **"दर्शनस्मरणपारम्पर्यानुगृहीतप्रत्यक्षगम्यानि ब्राह्मणत्वादीनि"** इत्यन्तो ब्राह्मणत्वादीनां प्रत्यक्षवेद्यत्वासम्भवाशङ्कापुरःसरं तत्सम्भवप्रतिपादनपरो ग्रन्थः ।

इयं च प्रत्यक्षविरोधेन श्रुतेरप्रामाण्याशङ्का **"दूरभूयस्त्वात्"** **"स्वपराधात्कर्तुश्च पुत्रदर्शनम्।"** इत्याभ्यां सूत्राभ्यां परिहृता जैमिनिना । दृष्टविरोधद्वयं किलाशङ्कितं पूर्वमाशङ्कापरसूत्रेण, तदुभयमप्यनेन सूत्रद्वयेन परिह्रियते । तत्राद्यो दृष्टविरोधः प्रथमं परिह्रियते—

**"दूरभूयस्त्वात्"** [ पू० मी० अ० १ पा० २ सू० १२ । ] **"गुणवादस्तु"** इति पूर्वसूत्रादनुवर्तते । **"तस्माद्धूम एवाग्नेर्दिवा ददृशे"** इत्यत्र **"अग्निं वावादित्यः सायं प्रविशति तस्मादग्निर्दूरान्नक्तं ददृशे"** इति पूर्वतरवाक्याद् **"दूराद्"** इत्यनुवर्तते, तच्च दूरभूयस्त्वे गौणम् । नक्तमग्निर्दूराद्ददृशे, दिवा धूमो दूराद्ददृशे इत्यन्वयः । तथा च धूम एवेति, अर्चिरेवेति चावधारणं दूरभूयस्त्वप्रयुक्तम् । तद्यथा—कश्चिद्दूरात्पर्वताग्रे वर्तमानमपि मशकमक्षिकादिकं न पश्यति पश्यति तु वृक्षादिकम्, तथा रात्रौ वर्तमानमपि धूमं न पश्यत्यर्चिरेव परं पश्यति, दिवा चार्चिर्न पश्यति पश्यति च धूमम् । अतो धूम एवेत्यर्चिरेवेति चावधारणं युज्यते । अस्ति च दूरादिति पदं पूर्वतरवाक्ये । तदनुवृत्तौ च न काप्यनुपपत्तिरर्थस्य ।

द्वेधा च गुणवाद इत्यस्यार्थः—गुणवादः—गुणाभिधानं स्तुतिरित्येकः। गुणादागतो वादः, गौणः शब्द इत्यर्थः । अयमपरो गुणवादः । द्वितीयो गुणवादः पूर्वमुक्तः—दूरादित्येतद्दूरभूयस्त्वे गौणमिति । अपरस्तु गुणवादोऽयम्—**अग्निर्ज्योतिर्ज्योतिः सूर्यः स्वाहेत्येव सायं होतव्यं, सूर्यो ज्योतिर्ज्योतिरग्निः स्वाहेति प्रातः ।"** इति विहितसंसृष्टहोममन्त्रस्तुतिरिति । **अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोति"** इत्यादिमन्त्रनियमविधिसन्निधाने **"तस्माद्धूम एवाग्नेर्दिवा ददृशे"** इत्याद्यर्थवादः श्रूयते । इदं च **"उद्यन्तं वावादित्यमग्निरनुसमारोहति"** इत्याद्युक्तस्य प्रातः सूर्येऽग्न्यारोहणस्य सायमग्नौ सूर्यान्वारोहणस्य चोपपादनार्थं प्रवृत्तम् । इदमपि च **"अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोति"** इति मिश्रलिङ्गमन्त्रनियमविधिसमर्थनार्थम् । तस्मात्सोऽयमर्थवाद उक्तसंसृष्टहोममन्त्रस्तुतिपर इति गुणवाद इति भावः । इत्थं धूमार्चिषोरुभयोर्दिवा नक्तं दर्शनात् **'धूम एवे'** त्यादेः योऽयं प्रत्यक्षविरोध आशङ्कितः स दूरभूयस्त्वप्रयुक्तो गुणवाद इति परिहृतः ।

अत्र शावरम्—**"दृष्टविरोधे उदाहरणम्—'तस्माद्धूम एवाग्नेर्दिवा ददृशे नार्चिः, तस्मादर्चिरेवाग्नेर्नक्तं ददृशे न धूमः' इति, 'अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोति । सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति प्रातः' इति मिश्रलिङ्गमन्त्रयोर्विधानस्याकाङ्क्षितत्वाच्छेषः । उभयोर्देवतयोः संनिधाने होम इति स्तुतेरुपपत्तिः । दूरभूयस्त्वात् धूमस्याग्नेश्चादर्शने गौणः शब्दः ।"**—इति ।

एतदर्थपरं च वार्तिकमित्थम्—**"'तस्माद्धूम एवे'ति 'दिवा-**

ग्निरादित्यं गच्छती' त्यस्योपपत्तित्वेन। तदिदं किमर्थमुच्यते? मिश्रलिङ्गाग्निहोत्रमन्त्रस्तुत्यर्थम् ।"—इति,

"कथं तु धूमएवेत्यवधारणा? दूरस्थैर्भूम्ना दिवा धूम एव गृह्यते रात्रावर्चिरिति केनचिदंशेन स्तुत्यालम्बनम् ।"—इति च ।

न किंचिदत्र तिरोहितं नाम । द्वितीयप्रत्यक्षविरोधपरिहारपरमिदमपरं सूत्रम्—

"स्त्र्यपराधात्कर्तुश्च पुत्रदर्शनात् ।"

[ पू० मी० अ० १ पा० २ सू० १३ । ]

अत्रापि **'गुणवाद'** इत्यनुवर्तते । **"प्रवरे प्रव्रियमाणे यजमानो जपति"** इत्यत्र **"न चैतद्विद्म"** इत्यादिः श्रूयते। अत्र **"न विद्म"** इति गुणवादः, गौणोयं शब्दो दुर्ज्ञानत्वे । दुर्ज्ञेयं ब्राह्मण्यमित्यर्थः । कथमिदमुच्यते—ब्राह्मण्यं दुर्ज्ञेयमिति ? तत्राह—**"स्त्र्यपराधात्"** इति । मातुर्व्यभिचारसम्भवादित्यर्थः । व्यभिचारश्च जारिणीजारयोरेव सुविज्ञानो नान्येषाम्, पुत्रस्योत्पादकं बीजिनं च जारिण्येकैव जानाति, न जारोऽपि । अतो ब्राह्मणात्स्वभार्यायां ब्राह्मण्यां जातत्वरूपं ब्राह्मण्यं मातुरेवैकस्याः सुविज्ञानम् । अत इदमुच्यते—**"को हि तद्वेद"** इत्यादि । इदं च दुर्ज्ञेयत्वाभिप्रायकम् । ननु जारोत्पन्नोऽपि क्षेत्रिण एव पुत्रः स्यादिति क्षेत्रिणो ज्ञानात्सुज्ञेयमेव ब्राह्मण्यमित्यत्राह—**"कर्तुश्च पुत्रदर्शनात्"** इति । आपस्तम्बादिभिः—**"उत्पादयितुः पुत्र इति हि ब्राह्मणम्"** इत्युपक्रम्य, **"रेतोधाः पुत्रं नयति"** इत्यादिना उत्पादयितुः कर्तुरेव पुत्र इति निश्चितत्वादित्यर्थः ।

तस्माद्दुर्विज्ञानं ब्राह्मण्यमिति फलितम् । एतादृशं दुर्विज्ञेयमपि ब्राह्मण्यं प्रवरानुमन्त्रणेन प्राप्यत इति स्तुत्यर्थं प्रवृत्तमिदम्, अतः प्रवरानुमन्त्रणस्य गुणवादोयम्—इत्यर्थः ।

अत्र शबरस्वामी—"दृष्टविरोध एवोदाहरणम्—'नचैतद्विद्म' इति । तत् 'प्रवरे व्रियमाणे देवाः पितर इति ब्रूया'दित्याकाङ्क्षितत्वादस्य विधेःशेषः । अब्राह्मणोऽपि ब्राह्मणः प्रवरानुमन्त्रणेन स्यादिति स्तुतिः । दुर्ज्ञानत्वादज्ञानवचनं गौणम् । स्त्र्यपराधेन कर्तुश्च पुत्रदर्शनेन—'अप्रमत्ता रक्षत तन्तुमेनम्' इत्यादिना दुर्ज्ञानम् ।"—इति ।

वार्तिककारस्तु—"प्रवरे प्रव्रियमाणे यजमानो वदेत्—'देवाः पितरः' इत्यादि । तत्प्रशंसार्थमुक्तम्—अब्राह्मणोऽपि ब्राह्मणो भवति प्रवरानुमन्त्रणेनेति । तत्र प्रसिद्धब्राह्मण्यानामेव ब्राह्मण्यलाभो निष्प्रयोजन इति तदुपपत्त्यर्थमुक्तम्—'न चैतद्विद्म' इत्यादि । ज्ञायमाने त्वज्ञानवचनं दुर्ज्ञानत्वात् । यत्सुखेनाज्ञानं तदज्ञानमेव । तच्च स्त्र्यपराधनिमित्तम् । सत्यपि स्त्र्यपराधे यदि मातुरेव क्षेत्रिणो वा पुत्रः स्यात् ततस्तयोः प्रसिद्धजातित्वान्नैव दुर्ज्ञानता भवेत् । तयोरप्येवमेवं तत्पूर्वजयोरित्यादिन्यायेन जातिरवधार्यतैव । यतस्तु—'माता भस्त्रा पितुः पुत्रः' इति स्मर्तॄणां दर्शनम् । जनयितुश्च नानाजातित्वोपपत्तिः । तेन वर्णसङ्करः ।" इत्यादि । ब्राह्मण्यस्य प्रत्यक्षेणैव ज्ञायमानत्वादज्ञेयतावचनं प्रत्यक्षविरुद्धत्वादप्रमाणमित्याशङ्कायाः, दुर्ज्ञेयत्वपरतया गौणत्वाङ्गीकारेण परिहारः कृतः ।

तदेवं मीमांसाशास्त्रप्रथमप्रवर्तकेन महर्षिणा जैमिनिना तदनुसारि-

भिर्भाष्यकारादिभिश्च प्रमाणसार्वभौमस्य वेदस्य प्रत्यक्षविरोधेनाप्रामाण्यमाशङ्क्याविरोधसम्पादनेन प्रामाण्ये समर्थिते, को नामापराधोऽस्माकं श्रुतेः प्रत्यक्षविरुद्धार्थप्रतिपादकत्वेऽप्रामाण्यमापादयताम् । न खलु वयं श्रुतेरप्रामाण्यं स्वीकुर्मः । न वान्येन स्वीकर्तव्यं वदामः। किंतु श्रुतेः प्रत्यक्षविरुद्धार्थप्रतिपादकत्वाङ्गीकारेऽप्रामाण्यापत्त्या तदविरुद्धार्थवर्णनमावश्यकं वदामः। एवं स्थिते वस्तुतत्त्वे केवलेन शब्दाडम्बरेणास्मदुक्तार्थखण्डनाभिनयोऽयं विदुषां पुरतः परिहासायैव भवतीति मन्यामहे वयम् ।

अत्रेदं बोध्यम्—विरुद्धप्रमाणातिरिक्तानिहिताप्रामाण्यशङ्कं प्रत्यक्षं विरोधिनः परोक्षाद्बलीयः। तादृशप्रत्यक्षपरोक्षविरोधे सति प्रबलप्रमाणभूततादृशप्रत्यक्षाविरोधेन चेन्नयनं शक्यं परोक्षस्य, तदा तस्य प्रामाण्यमुज्जीवति, अन्यथा तु परोक्षस्याप्रामाण्यमेव स्वीकर्तव्यं भवति।

**"आदित्यो यूपः" "यजमानः प्रस्तरः"** इत्यादिवेदवाक्यानां प्रत्यक्षविरोधादेव यथाश्रुतशब्दलभ्यार्थकत्वं परित्यज्य गौण्या वृत्त्या स्तावकत्वमाश्रित्यार्थवादताङ्गीकृता मीमांसकैः । अन्यथा तत्रापि प्रत्यक्षविरोधानादरेण गुणविधित्वमेवाङ्गीकृतमभविष्यत् ।

पूर्वमीमांसायां प्रथमेऽध्याये चतुर्थपादे तत्सिद्धिपेटिकायस्पष्टमेतत् । **"आदित्यो यूपः" "यजमानः प्रस्तरः"** इत्यादौ—आदित्ये यूपाभेदः यजमाने प्रस्तराभेदश्च प्रत्यक्षबाधित इति न तदर्थकत्वं श्रुतीनां शक्यशङ्कमपीति, गुणविधित्वपूर्वपक्षेणार्थवादत्वं सिद्धान्तितम् । तथा च तत्सिद्धिसूत्रभाष्यम्—

**" 'यजमानः प्रस्तरः', 'यजमान एककपालः' इत्यादि समाम्नायते । तत्र संदेहः—किं यजमानः प्रस्तर इत्येष गुण-**

विधिः, किमर्थवादः—इति। तथा 'यजमान एककपाल' इति। किं तावत्प्राप्तम्? गुणविधिः इति, किमेवं भविष्यति? एवमपूर्वमर्थं विधास्यति । इतरथाऽर्थवादोऽनर्थकः स्यात्, अर्थवत्त्वं च न्याय्यम्, तस्माद्विधिः। नैतदेवं, यदि विधिः स्यात्, प्रस्तरकार्ये यजमानो नियम्येत यजमानकार्ये वा प्रस्तरः। 'प्रस्तरे जुहूमासादयति'—'सर्वा वा स्रुवः' इति यजमाने जुहूरासाद्येत सर्वा वा स्रुव इति । तथा सति न याजमानं शक्यते कर्तुम्—'दक्षिणतो ब्रह्मयजमानावासाते कर्मणः क्रियमाणस्य' इति, नच प्रस्तरो याजमानं शक्नोति कर्तुम् । तस्मान्न विधिः।" "कथं पुनरनयोः सामानाधिकरण्यं ज्ञायते? नहि प्रस्तर एककपालो वा यजमानः । नच यजमान एकस्मिन्कपाले संस्कृतः पुरोडाशः? प्रथमो वा कुशमुष्टिर्लूनः? कथं परशब्दः परत्र वर्तते? किमर्थं वा ज्ञायमानस्य सङ्कीर्तनम्? इति ।" "उच्यते, ज्ञायमानः सङ्कीर्त्यते स्तोतुम्" "कथं परत्र वर्तते परशब्द इति? गुणवादस्तु–गुणादेष वादः" "तस्मादेवंजातीयका अर्थवादा न विधयः इति" । इति;

"'आदित्यो यूपः' इत्यादि श्रूयते । तत्र गुणविधिः, अर्थवादः—इति संदेहः । अर्थवत्त्वाद्गुणविधिः । अशक्यत्वाद्यूपकार्यसाधने यजमानस्य, यजमानकार्यसाधने वा यूपस्य, विध्यन्तराभावाच्च न विधिः । विधिस्तुत्यर्थं संवादः । गुणवादात्सामानाधिकरण्यम् । को गुणः? सारूप्यम् । किं सारूप्यम्? ऊर्ध्वता तेजस्विता च । तस्मादेवंजातीयका अर्थवादाः।"—इति च ।

तदेवं वैदिकानां वाक्यानां प्रत्यक्षविरोधेन यथाश्रुतेऽपूर्वार्थविधिरूपत्वं परित्यज्यार्थवादत्वमाश्रितं मीमांसकैरिति स्थिते प्रत्यक्षाविरुद्धत्वतद्विरुद्धत्वाभ्यां प्रामाण्याप्रामाण्यव्यवस्थित्यभावकथनं भ्रान्तकृत्यमेवेति सिद्धं भवति ।

यदप्युक्तं—'अन्यथा ज्योतिष्टोमादिभिः स्वर्गाद्यदृष्टभावनायास्तदविरुद्धत्वाशक्यसाधनत्वात्तादृशपुरुषार्थापूर्वविधीनां प्रमत्तप्रलापताप्रसङ्गः सुदुष्परिहरः ।''—इति ।

तदिदं स्वात्मानं स्वोक्तिं च विस्मृत्योक्तमिति मन्यामहे । स एवायं महापुरुषः, यः खलु श्रुतेः प्रत्यक्षविरुद्धार्थप्रतिपादकत्वेऽङ्गीक्रियमाणे सत्युन्मत्तप्रलपितत्वमापादयतामस्माकमुपालम्भे प्रवृत्तः—

"सर्वप्रमाणमौलिमालतीमालां श्रुतिमपि प्रत्यक्षप्रमाणातीतमर्थमुपपादयन्तीं नाभ्युत्सहते सोढुं, प्रत्युतापत्तिप्रदर्शनापदेशेन प्रमत्तामेव तामेतां व्यपदिशति । तदेष सुदुर्निरसो भवतः स्वोक्तिभङ्गैकगम्यो वेदस्याप्रामाण्यवादः ।"

इत्याद्यलिखत् । इदानीं च प्रमत्तप्रलापताप्रसङ्गं स्वयमेव दर्शयति । प्रतिपक्षिणः पक्षे वेदस्योन्मत्तप्रलपितत्वापत्तिं प्रदर्शयतामस्माकं शिरसि वेदाप्रामाण्यवादित्वमारोपयन्नयं कथं नाम स्वयमपि तस्यैव वेदस्य प्रमत्तप्रलापताप्रसङ्गं प्रदर्शयन्न भवति वेदाप्रामाण्यवादी । तुल्यः खलु न्याय उभयोरपि । परपक्षे वेदस्योन्मत्तप्रलापतापादनं चेद्वेदाप्रामाण्यवादितासम्पादकं, स्वयमप्ययं वेदस्य प्रमत्तप्रलापतां प्रसञ्जयन्वेदाप्रामाण्यवादी नूनं भवति ।

अविचारितरमणीयं चास्य वचनम्, वेदस्य प्रत्यक्षविरुद्धार्थप्रतिपादकत्वं न सम्भवतीति खल्वस्माभिरुक्तम् । प्रत्यक्षज्ञानस्य बाधविधया वा सत्प्रतिपक्षविधया वा तदभावावच्छेदकत्वेन गृहीतधर्मवत्ताज्ञानमुद्रया वा प्रकारान्तरेण वा प्रतिबन्धकतया तद्विरुद्धार्थप्रमितिजनकत्वं श्रुतेर्न सम्भवतीति

तात्पर्यं तथाप्रतिपादयतान् । तत्र च श्रुतिप्रतिपादनीयार्थविरुद्धार्थज्ञानं यदि प्रत्यक्षेण स्यात् तदा प्रतिबन्धकसद्भावात्तद्विरुद्धार्थप्रमितिजननं श्रुत्या न कर्तुं शक्यते, प्रत्यक्षेण तादृशनिश्चयाभावे च श्रुत्या स्वार्थप्रमितिजननं शक्यमेव कर्तुम्, नतु श्रुतिप्रतिपाद्यार्थस्य प्रत्यक्षाविरुद्धत्वज्ञानमप्यपेक्षितम्; अप्रयोजकत्वात् । प्रतिबन्धकज्ञानाभावस्य कारणत्वे कारणतावच्छेदकत्वे वा न्याय्येऽप्यविरुद्धत्वज्ञानस्य ज्ञानोत्पादनसामग्रीमध्ये प्रवेशाभावात् । प्रमात्वग्राहकसामग्रीमध्ये चाप्रवेशात् । प्रामाण्यस्य स्वतो ग्राह्यतापक्षे ज्ञानसामान्यसामग्र्यतिरिक्तस्यानपेक्षणात् । परतोग्राह्यत्वपक्षेऽप्यनुमित्यादिरूपे प्रामाण्यज्ञानेऽविरुद्धत्वज्ञानापेक्षाविरहात् । तथा च ज्योतिष्टोमादेः स्वर्गाद्यदृष्टभावनाजनकत्वाभावप्रत्यक्षाभावेन **"ज्योतिष्टोमेन स्वर्गकामो यजेत"**त्यादिविधीनां प्रमितिजनकत्वमक्षुण्णमेवेति तद्विधीनां प्रमत्तप्रलापतापादनमयुक्तमेवेति सिद्धम् ।

**एतेन**—"अलौकिकार्थस्यैव श्रुतिप्रतिपाद्यत्वात्, तस्य च तदविषयत्वात्, अन्यथा निर्विशेषत्वप्रसङ्गात् ।"—**इति,**

पञ्चम्यन्तत्रयं परास्तम्, विषयतासम्बन्धावच्छिन्नकर्मप्रयोज्यप्रत्यक्षानुनित्यन्यतरत्वावच्छिन्नाभावविशिष्टत्वरूपालौकिकत्वविशिष्टार्थस्य श्रुतिप्रतिपाद्यत्वेऽपि, तस्यास्मदादिलौकिकप्रत्यक्षविषयत्वाभावेऽपि वा, स्वप्रतिबध्यतावच्छेदकत्व—स्वप्रतिबन्धकतावच्छेदकत्वान्यतरसम्बन्धेन तादृशलौकिकप्रत्यक्षविशिष्टविषयताशालिप्रमितिजनकत्वाभावरूपस्य प्रत्यक्षाविरुद्धार्थाप्रतिपादकत्वस्य श्रुतावबाधात् । तथात्वेऽपि स्वसमनियतत्वसम्बन्धेन प्रत्यक्षविशिष्टत्वरूपस्य प्रत्यक्षनिर्विशेषत्वस्य श्रुतौ प्रसङ्गासम्भवात् । समनियतत्वघटकमधिकरणत्वं स्वजन्यबोधविषयतासम्बन्धेन, भेदप्रतियोगितावच्छेदकत्वमपि तेनैव सम्बन्धेन ।

**एतेन**—"किंचे" त्यारभ्य "अन्यथा पुन"रित्यन्तमकाण्डे ताण्डवमपि समाहितं वेदितव्यम् । प्रत्यक्षाविरुद्धार्थप्रतिपादकत्वस्य तत्समानार्थकत्वरूपतन्निर्विशेषतासम्पादकत्वाभावात् । अस्मदनुक्तमनभिप्रेतं च कमप्यर्थमस्मदुक्तत्वेन परिकल्प्य तदुपरि दूषणदानस्य भ्रान्तकृत्यत्वाच्च । न खलु वयं प्रत्यक्षनिर्विशेषमर्थं प्रतिपादयति वेद इत्येतदर्थबोधकमपि शब्दमलिखाम । प्रत्यक्षविरुद्धार्थकत्वाङ्गीकारे वेदस्योन्मत्तप्रलापतापत्तिरित्येव परमलिखाम । न च प्रत्यक्षविरुद्धार्थकत्वासम्भवाभिधानं प्रत्यक्षनिर्विशेषमर्थं प्रतिपादयति वेद इत्येवम्परम्, शब्दस्यातथाविधत्वात् ।

**यत्पुनरुक्तम्**—"किंच प्रत्यक्षं तावल्लौकिकं विवक्षितमुताहो अलौकिकम्? नाद्यः, वेदस्य मात्रयापि तदविरुद्धार्थप्रतिपादकत्वे पुरुषदोषासङ्गावस्य वक्तुमशक्यत्वात् ।" **इति** ।

इदमपि न विदुषां विचारसहम्, वेदस्य प्रत्यक्षाविरुद्धार्थकत्वाङ्गीकारमात्रेण प्रत्यक्षगतानां दोषाणां वेदे संस्पर्शस्यानापाद्यत्वात् । न खलु तदविरुद्धार्थप्रतिपादकस्य तद्गतदोषवत्त्वमित्यपि कश्चिन्नियमो भवति । पीतः शङ्ख इति वाक्याविरुद्धार्थप्रतिपादकस्य भूतलं घटवदिति वाक्यस्य पीतः शङ्ख इति वाक्यप्रयोक्तृपुरुषगतदोषेण संस्पर्शादर्शनात् । पीतः शङ्ख इति प्रत्यक्षाविरुद्धार्थप्रतिपादकस्य घटः प्रमेय इत्यादिवाक्यस्य पीतशङ्खप्रत्यक्षकर्तृपुरुषगतदोषैः संस्पर्शस्यादर्शनाच्च । अन्यथा पीतशङ्ख इति वाक्यजन्यबुद्धेरिव पीतशङ्खप्रत्यक्षस्येव च भूतलं घटवदिति वाक्यजन्यबुद्धेः घटः प्रमेय इति वाक्यजन्यबुद्धेरपि च सर्वत्र भ्रमत्वावश्यम्भावात् ।

**एतेन**—"न द्वितीयः" **इत्यादि** "प्रणयनापत्तेः ।"

इत्यन्तं परास्तं वेदितव्यम्;—अलौकिकप्रत्यक्षे पुरुषदोषस्य सद्भावेऽसद्भावे वा वेदे तत्संस्पर्शप्रसङ्गाभावस्य पूर्वन्यायेनैव सिद्धेः ।

यत्तु कृष्णद्वैपायनादीनां भ्रमविप्रलिप्सादिना विप्रलिप्सत्वापादनम्, तत्रेदं वक्तव्यम्, यद्यपि तेषां महात्मनां बुद्धिपूर्वकं विप्रलिप्सादिकं न वक्तुं युक्तम्, भ्रमस्तु सम्भवत्येव तेषामपि महर्षीणाम् । ब्रह्मादिस्तम्बपर्यन्तानां प्राणिनां कर्मानुगुणप्रकृतिसम्बन्धशालिनां रजस्तमोगुणोद्रेकानुगुणभ्रमादिसम्भवस्यावर्जनीयत्वात् । भ्रमादीनां तत्तद्गुणकार्यत्वात् । सर्वशास्त्रादिमप्रवर्तकस्य ब्रह्मणोऽपि रजस्तमोऽभिभवस्य मात्स्यादिपुराणप्रतिपन्नतयाऽन्येषां महर्षीणां तत्सम्भवस्य कैमुतिकन्यायसिद्धत्वात् । अत एव हि पुराणानां सात्त्विकराजसतामसविभागः, तत्र सात्त्विकानां प्राबल्यमन्येषां तदविरुद्धानां ग्राह्यत्वं विरुद्धानामुपेक्षणीयत्वं च पुराणादिप्रसिद्धमुपपद्यते ।

आब्रह्मस्तम्बपर्यान्ता जगदन्तर्व्यवस्थिताः ।
प्राणिनः कर्मजनितसंसारवशवर्तिनः ॥"—इति,
"यस्मिन्कल्पे तु यत्प्रोक्तं पुराणं ब्रह्मणा पुरा ।
तस्य तस्य तु माहात्म्यं तत्स्वरूपेण वर्ण्यते ॥"
"अग्नेः शिवस्य माहात्म्यं तामसेषु प्रकीर्त्यते ॥" इति,
"सात्त्विकैरेव वर्तेत सात्त्विकोक्तं समाचरेत् ।
राजसं तामसं चैव दूरतः परिवर्जयेत् ॥"—इति च स्मर्यते ।

यत्तु—ऊर्ध्वस्रोतसां योगिनां ज्ञानस्यैवालौकिकपदाभिलप्यत्वात्"—इति, तदयुक्तम्, तेषामपि योगिनां बाह्येन्द्रियजन्यघटादिविषयकज्ञानानामलौकिकपदाभिलप्यत्वाभावेन तदीयज्ञानसामान्यस्यालौकिकपदाभिल-

घ्यत्वासम्भवात् । "योगिनां ज्ञानस्यैवे"त्येवकारोऽप्ययुक्तः, नित्यमुक्तानां भगवतश्च ज्ञानानामप्यलौकिकपदाभिलप्यत्वसम्भवात् ।

**यत्तु**—"धर्मश्च ब्रह्म चेत्युभयं वेदार्थः, प्रमेयत्वात् ।"

इत्युक्तं, तन्न, प्रमेयत्वस्य प्रमाविषयत्वरूपस्य केवलान्वयित्वेना-तथाभूतस्य वेदार्थत्वस्य तेन साधनासम्भवात् । तथासति तस्य घटादिसा-धारण्येन व्यभिचारात् । इत्थं प्रयुञ्जानश्चायमात्मनोऽपूर्वनैयायिकतां सूचयति । किंचात्र प्रमेयत्वापेक्षया तद्घटकविषयत्वमात्रेणैव तुल्यरीत्या हेतूकर्तुं शक्यमिति गुरुधर्मस्य निर्देशश्च व्यर्थः । असद्धेतुत्वं चोभयो-स्तुल्यमेव ।

**यत्तु**—"एष तु प्रज्ञापराधो भवतस्तादृशालौकिकापौरुषेयनित्यनिर्दुष्टस्य शब्दराशेर्वेदस्य यत्किमप्यपदिश्य यदप्रामाण्योत्प्रेक्षणं नाम ।"—**इति** ।

तदिदमशक्तस्य सतः केवलशापाक्षरप्रयोगमात्रम् । न वयमेतादृ-शेभ्यः शापाक्षरेभ्यो बिभीमः । लोके योऽपि कोऽपि यथातथा वापि स्वोत्प्रेक्षितया रीत्या वेदानामर्थं वर्णयन्न केनापि किमपि वक्तव्य इत्य-नेन महाशयेनाशब्दमुच्यत इव । तथाविधं यं कमप्युद्दिश्य त्वत्पक्षे वेदाप्रामाण्यापत्तिरित्युक्तौ सोप्येतादृशान्येव शापाक्षराणि त्वदुपदेशाव-गतानि प्रयोक्ष्यति । वेदस्याप्रामाण्यं परपक्षेऽस्माभिरापाद्यते, नतु स्वपक्षे स्थाप्यत इत्यसकृदुक्तमिदानीमपि **वदामः** ।

**यत्तु**—"वयं पुनः श्रीमदाचार्यचरणपरिचरणप्रवणतया नांशतोऽपि वैदि-कभागवतैरभ्युपेयमिदं ब्रूमः ।'—**इति** ।

तत्तथैव, वयमपि तथैव ब्रूमः—न केनापि वैदिकेन भागवतेन पक्षोऽयमभ्युपेयः, यत्र वेदानामप्रामाण्यं प्रसज्यत इति ।

एतादृशं प्रतिज्ञामात्ररूपं वचनं पश्यन्तो वयं चित्रीयमाणमानसा-भवामः, येनकेनचिद्दोषे समुत्प्रेक्षिते तन्निवारणं खलु कर्तव्यं भवति

युक्त्या प्रमाणेन वा। तत्राप्रवर्तमानस्य दोषोत्प्रेक्षणं मा कुरु मा कुरु इति वचनं ह्यशक्तवचनं सन्न कस्मैचिदप्यर्थाय कल्पते।

यदुक्तम्—"वेदाश्च ब्रह्मणः प्राकृतातिरिक्तनित्यनिर्दुष्टवेदैकवेद्यत्वमावेदयति।" इति।

तत्र वेदे प्राकृतातिरिक्तत्वविशेषणं कस्मै प्रयोजनायेति न जानीमो वयम्, नित्यत्वनिर्दुष्टत्वाभ्यामेव सर्वाभीष्टसिद्धेः। यदि वेदस्य प्राकृतत्वं दोष इत्यभिहितं स्यात्तदापि दोषसामान्यशून्यत्ववाचिना निर्दुष्टशब्देनैव तस्यापि दोषस्य प्राकृतत्वस्य वारणं भवत्येव।

वस्तुतस्तु वेदस्य शब्दराश्यात्मकस्य प्राकृतत्वमवर्जनीयमेवेति विशेषणं तद्बाधितमपि भवति। शब्दस्याकाशगुणत्वं शास्त्रसिद्धम्। सगुणानां तत्तद्भूतानां सृष्टिप्रलयौ शास्त्रे प्रतिपाद्येते। न खलु प्राकृतोऽप्राकृत इति शब्दस्य विभागः केनापि कृतो दृष्टः। यदि त्वप्राकृतत्वमप्राकृतार्थप्रतिपादकत्वरूपं विवक्षितं तर्हि प्रकृतानुपयुक्तमिति तद्विशेषणं तदाप्यनर्थकमेव, अप्राकृतवस्तुप्रतिपादकत्वस्यास्मदादिशब्देष्वपि सम्भवात्। प्राकृतप्रतियोगिकभेदस्त्वप्रयोजकः। अन्यादृशं चाप्राकृतत्वं वेदस्याप्रसिद्धम्।

ब्रह्मणो वेदैकवेद्यत्वं तदितरप्रमाणासंवेद्यत्वं च पृथक् पृथक् प्रतिज्ञाय तत्र प्रमाणतया—**"न चक्षुषा गृह्यते नापि वाचा"** **"यतो वाचो निवर्तन्ते"** इत्यादि प्रदर्शयन्स्ववाग्विरोधमपि न जानाति। वेदवेद्यत्वं शब्दसामान्याग्राह्यत्वं च हि परस्परविरुद्धम्। **"वाचा न गृह्यते"** इति **"यतो वाचो निवर्तन्ते"** इति च यदि शब्दसामान्याग्राह्यत्वबोधकं, कथं तर्हि वेदवेद्यत्वशब्दघटितवेदैकवेद्यत्वस्याविरोधि भविष्यति।

**"यतो वाचो निवर्तन्ते"** इत्येतच्च ब्रह्मानन्दस्य वाङ्मनसापरिच्छेद्यत्वं बोधयति । नच तत्र ब्रह्मस्वरूपस्य प्रसक्तिरस्ति, उत्तरत्र **"आनन्दं ब्रह्मणो विद्वान्"** इति निर्देशात् । नच स्वरूपात्मकानन्दपरं तदिति वक्तुं शक्यं **"ब्रह्मण"** इति षष्ठीश्रवणात्, षष्ठ्या भेदबोधनात् । स्वरूपात्मकानन्दनिर्देशस्तु—आनन्दं ब्रह्म विद्वानिति स्यात् । किं चेदं वचनं न वागग्राह्यत्वपरम्, किं तु वाचा परिच्छेदानर्हत्वपरमेव, पूर्वत्र **"स एको ब्रह्मण आनन्दः"** इति ब्रह्मानन्दस्वरूपकथनात् । अन्यथा परस्परविरोधापत्तेः । जननी मे वन्ध्येति वदुपहास्यं च भवेत् । अतोऽस्य वचनस्य ब्रह्मणो वेदैकवेद्यतायां प्रमाणतया प्रदर्शनं भ्रान्तिकृत्यमेव ।

**"न चक्षुषा गृह्यते नापि वाचा"** इत्यत्र चक्षुषा न गृह्यते वाचा न गृह्यते—इत्यन्वये चक्षुर्जन्यज्ञानविषयत्वाभावः फलतः शब्दजन्यबोधविषयत्वाभावश्च ब्रह्मणि बोध्येत । तत्र चक्षुर्जन्यबोधविषयत्वाभावस्य त्वदभिप्रायानुरोधेन कथंचित्सम्भवेऽपि शब्दजन्यबोधविषयत्वाभावो यथाश्रुतो न सम्भवति, गृहीतपदपदार्थशक्तेर्व्युत्पन्नस्य ब्रह्मपदश्रवणे ब्रह्मविषयकबोधस्यावश्यकत्वात्, अन्ततो वेदस्यापि शब्दरूपत्वेन तज्जन्यबोधविषयताया आवश्यकत्वाच्च । अतः शब्दजन्यबोधविषयत्वाभावमात्रं न विवक्षितं, किंतु—ब्रह्म इयत्—एतादृशं इति ग्रहीतुं न शक्यते इत्येव विवक्षितमिति वक्तव्यम् । तच्च शब्दजन्यपरिमाणादिप्रकारकबोधविषयत्वाभावादिरूपं भवति । युक्तं चैतत्, ब्रह्मणोऽपरिच्छिन्नस्वरूपगुणविभवादिमतः परिच्छेदासम्भवात् । **"प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ।"** ब्र० सू० अ० ३ पा० २. ] इति सूत्रोक्तरीत्या ब्रह्मण इयत्ताराहित्यस्य शास्त्रसिद्ध-

त्वात् । एवं च सत्यस्यापि वचनस्य ब्रह्मणो वेदैकवेद्यत्वांशे प्रमाणतयोदाहरणं भ्रान्तिमात्रकार्यमिति सिद्धं भवति, वेदवेद्यत्वांशे वेदेतरावेद्यत्वांशे वाऽस्योपयोगाभावात् । सामान्यतः शब्दजन्यबोधविषयत्वमात्रनिषेधपरत्वे चास्याः श्रुतेः प्रत्युतैतत्प्रतिज्ञातार्थविरुद्धत्वाच्च ।

यत्तु—"दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम् ।" (**इत्यनेन सह वेदैकवेद्यत्वस्य विरोधमाशङ्क्य,**) "यमेवैष वृणुते तेन लभ्य" इति श्रुतेरिति (**समाधानमुक्तम्,**)

तदपि भ्रान्तिविलसितम्, विरोधस्यैवाप्रसक्तेः शङ्काया अनुदयात् । वेदैकवेद्यत्वं हि ब्रह्मस्वरूपस्य प्रतिज्ञातं महाशयेनानेन, अर्जुनाय भगवता प्रदर्शितं च दिव्यविग्रहविशिष्टरूपम्, नतु केवलं स्वरूपम् । स्पष्टं चेदम्—"**इहैकस्थं जगत्कृत्स्नं पश्याद्य सचराचरम् । मम देहे गुडाकेश यच्चान्यद्द्रष्टुमिच्छसि ॥**" इति पूर्वश्लोकस्थेन देहशब्देन,—"**एवमुक्त्वा ततो राजन् महायोगेश्वरो हरिः । दर्शयामास पार्थाय परमं रूपमैश्वरम् ॥**" इत्युत्तरश्लोकगतेन रूपशब्देन च । तदेव ह्यप्राकृतं भगवतो रूपम्—"**अनेकवक्त्रनयनमनेकाद्भुतदर्शनम् । अनेकदिव्याभरणं दिव्यानेकोद्यतायुधम् ॥**" इत्यादिना विशेष्यत उत्तरत्र । "**न चक्षुषा गृह्यते नापि वाचा**" इत्यादिप्रमाणोदाहरणेन चक्षुराद्यगोचरतया प्रतिज्ञातं च ब्रह्मणः स्वरूपं "**सत्यं ज्ञानमनन्तं**" इत्याद्युक्तलक्षणम् । तत्कथमनयोर्विरोधः? विरोधाभावे च कथमाशङ्काया उत्थानम्? ।

अथास्तु मा वा विरोधाशङ्काया उत्थानम्, उत्थापिताया आशङ्कायाः समाधानमयुक्तम्, "**यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम् ।**" इति परमपुरुषस्वरूपसाक्षात्कारे परमपुरुष-

वरणैकहेतुकतायाः फलतः परमपुरुषवरणहेतूपासकगुणविशेषहेतुकताया लाभेऽपि वेदैकवेद्यत्वरूपस्वप्रतिज्ञातार्थभङ्गस्यानिवारणात् । भगवतो वेदैकवेद्यत्वेऽर्जुनकृतभगवद्दर्शनं कथमुपपद्यत इति ह्याशङ्का ? तत्रार्जुनकृतभगवद्दर्शनस्य भगवत्कृपामूलकत्वकथनमात्रेण किं समाधानं भवति? वेदवेद्यत्वांशेऽपि भगवत्कृपाया हेतुत्वं चायमेव स्वयमुत्तरत्र वक्ष्यति। वेदवेद्यत्वे चक्षुषा दर्शनीयत्वे चेत्युभयत्र भगवत्कृपाया हेतुत्वस्य तुल्यत्वे चक्षुषा दर्शनीयत्वे भगवत्कृपाया हेतुत्वप्रदर्शनं तत्र कस्य वैलक्षण्यस्य प्रदर्शनरूपं भवति? येन विरोधशमनं स्यात् । अप्राकृतचक्षुषा परमपुरुषस्य दर्शनीयतायास्तत्र परमपुरुषकृपाविशेषस्य हेतुतायाश्च प्रदर्शितभगवद्गीतावचनश्रुतिभ्यां लाभे पि, वेदैकसमधिगम्यत्वेन सह दिव्यचक्षुर्दर्शनीयत्वस्य विरोधस्तदवस्थ एव तिष्ठति।

अथोच्येत, वेदैकवेद्यत्वं नाम वेदवेद्यत्वे सति वेदेतरावेद्यत्वं, तच्च वेदेतरजन्यबोधाविषयत्वरूपम्, तत्र वेदेतरजन्यबोधे परमपुरुषप्रसादाप्रयोज्यत्वं विशेषणं देयं, पूर्वोक्तश्रुतिस्मृत्याद्यनुरोधात्; तथा च वेदवेद्यत्वे सति परमपुरुषप्रसादाप्रयोज्यवेदेतरजन्यबोधाविषयत्वमेव वेदैकवेद्यत्वमिति न दोष इति; यद्येवं प्रमाणान्तरानुरोधेन वेदैकवेद्यत्वस्य सङ्कोचोऽभ्युपगन्तव्यः, तर्हि **"न चक्षुषा गृह्यते नापि वाचा, मनसा तु विशुद्धेन ।" "हृदा मनीषा मनसाभिक्लृप्तः" "मनोमयः प्राणशरीरः" "मनसैवानुद्रष्टव्यम्"** इत्यादिप्रमाणानुरोधात् विशुद्धमनोभिन्नत्वमपि विशेषणं दीयतां वेदेतरस्मिन् । तथा च सतिविवेकविमोकादिसाधनसप्तकानुगृहीतपरमात्मोपासननिर्मलीकृतमनोजन्यसाक्षात्कारविषयत्वमपि कामं सेत्स्यत्येव ब्रह्मणः ।

यत्तु—"वस्तुतस्तु 'मुह्यन्ति यत्सूरयः', 'तत्र मुह्यन्ति सूरयः' 'शब्द

ब्रह्म सुदुर्वोधम्' इत्यादिवचःप्रपञ्चैस्तत्तादृशालौकिकार्थस्य सुदुर्वोधत्वात्तदेकसंवेद्यत्वस्यापि भगवदनुग्रहैकसाधनत्वम्।"

इत्यादिना भगवत्साक्षात्कारस्येव तदेकसंवेद्यत्वस्यापि तुल्यतया भगवदनुग्रहैकसाधनत्वकथनम्; तन्न विचारसहम्। तथाहि—तदेकसंवेद्यत्वं नाम वेदैकसंवेद्यत्वं विवक्षितम्, तच्च तत्संवेद्यत्वतदितरासंवेद्यत्वरूपदलद्वयात्मकम्। तत्र वेदवेद्यत्वरूपतत्संवेद्यत्वांशे भगवदनुग्रहस्य प्रयोजकतासम्भवेऽपि तदितरासंवेद्यत्वांशे न तस्य साधनत्वसम्भवः, तस्य तद्वस्तुस्वरूपायत्तत्वात्। भगवदनुग्रहैकसाधनत्वमित्यत्रैकशब्दप्रवेशश्चायुक्तः। तथात्वे हि भगवदनुग्रहसाधनकत्वे सति तदितरासाधनकत्वमर्थो लभ्येत, न हि वेदजन्यभगवद्विषयकतत्वनिर्णयात्मकज्ञाने शक्तिज्ञानादिकं नापेक्ष्यते! शाब्दबोधसामान्यसामग्र्या सह कारणविशेषस्य शाब्दबोधविशेषहेतुताकथनसम्भवेऽपि विशेषकारणव्यतिरेकेण सामान्यसामग्र्यनपेक्षाकथनासम्भवात्।

"तदेकसंवेद्यत्वस्यापि भगवदनुग्रहैकसाधनत्व"मित्यत्रापिशब्दप्रवेशेन साक्षात्कारवेदजन्यशाब्दबोधयोस्तुल्यतया भगवदनुग्रहस्य साधनत्वं विवक्षितमिति ज्ञायते; तच्चायुक्तम्, दर्शनशाब्दबोधयोस्तुल्यफलत्वाभावेन तत्साधनस्यापि तुल्यत्वासम्भवात्। न खलु भगवतः साक्षात्कारे यादृशीभक्तिर्हेतुस्तादृश्येव वेदजन्यतत्वनिर्णयेऽपि हेतुरिति युक्तम्।

अत्रेदं बोध्यम्,—"**शुद्धभावं गतो भक्त्या शास्त्राद्वेद्मि जनार्दनम्।**" इत्यादिशास्त्राच्छास्त्रजन्यतत्वनिर्णयात्मकबोधे भक्तेरुपयोगो लभ्यते। "**भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन। ज्ञातुं द्रष्टुं च तत्वेन प्रवेष्टुं च परंतप॥**" इत्यादिशास्त्रेण च

ज्ञानदर्शनयोर्भक्तेर्हेतुत्वं लभ्यते, ज्ञानदर्शनयोश्च महदेवान्तरम् । तत्रैवं व्यवस्था क्रियते—सम्यक्छास्त्रश्रवणानुगुणकिंचिदानुकूल्यमात्ररूपा भक्तिः शास्त्रजन्यज्ञाने हेतुः, दर्शनसमानाकारात्यर्थप्रियपरमकाष्ठापन्नतैलधाराविच्छिन्नस्मृतिसन्ततिरूपा भक्तिर्दर्शनहेतुरिति । अन्यथाऽन्योन्याश्रयप्रसङ्गश्च । तदिदमनुगृहीतं जिज्ञासाधिकरणश्रुतप्रकाशिकायां व्यासार्यैराक्षेपसमाधानरूपेण—

**"ननु 'यया त्वमभिजानासि' 'भक्त्या वेद्मि' इति प्रश्नप्रतिवचनाभ्यां विद्याभक्तिशब्दयोरैकार्थ्यं प्रतीयते । भक्तिरूपा च विद्या मोक्षायेति प्रागुपपादितम् । ततश्च शास्त्रमूला भक्तिः, भक्तिमूलं शास्त्रज्ञानमित्यन्योन्याश्रय इति चेत् ? नैवं, श्रवणवेलायामेव पदार्थतयावगम्यमानेषु परमात्मगुणादिष्वनुकूलबुद्धिगोचरत्वाद्विद्याभक्तिशब्दयोः । तेन सम्यग्वाक्यार्थनिर्णयलाभः । पूर्वपक्षतयोपन्यस्यमानेऽपि सुगताभिमतवेदाप्रामाण्यात् हि भवति अद्वेषो वैदिकानाम् । भगवद्गुणादिष्वनुरक्तचित्तता भवति । न चैषा साक्षात्कारकल्पानिरन्तरानुध्यानरूपा भक्तिः । अतो नान्योन्याश्रयः ।"**—इति ।

श्रीमद्वेदान्ताचार्यैश्च गीताभाष्यतात्पर्यचन्द्रिकायामयमेवार्थोऽनुगृहीतः । तथाच—**"भक्त्या त्वनन्यया शक्यः"** इत्यादिश्लोकभाष्यटीका—**"ज्ञानदर्शनप्राप्तिहेतुत्वे भक्तेः पर्वभेदान्नान्योन्याश्रयणादिदोषः । पूर्वजन्मसुकृतमूलसात्विकजनसंवादादिजनितं यथावच्छ्रवणानुगुणं किंचिदानुकूल्यरूपं भक्तिमात्रं शास्त्रजन्यज्ञानोत्पत्तौ सहकारि भवति"** इति । इदमुक्तं भवति परिपूर्णभक्तेः शास्त्रजन्यज्ञानहेतुत्वे शास्त्रजन्यज्ञानाच्छ्रवणमननादिपरम्परया

भक्तिसिद्धिः, भक्त्या शास्त्रजन्यज्ञानप्राप्तिरित्यन्योन्याश्रयणं स्यात्, आनुकूल्यमात्ररूपाया भक्तेः सहकारिताङ्गीकारे नायं दोषः, इति ।

इत्थं च सति—"ये तु त्वदङ्घ्रिसरसीरुहभक्तिहीना-
स्तेषाममीभिरपि नैव यथार्थबोधः ।
पित्तभ्रमञ्जनमनाम्रुषि जातु नेत्रे
नैव प्रभाभिरपि शङ्खसितत्वबुद्धिः ॥"

इति श्रीकूरनाथश्रीसूक्तिरप्याभिमुख्यादिरूपभक्तिपर्वाभिप्रायैव नेया भवति । एवं च यथा मोक्ष-भगवत्साक्षात्कारशास्त्रजन्यज्ञानेषु भक्तेरुपयोगं प्रतिपादयतां वचनानां भक्तिपर्वभेदविषयतया व्यवस्था, तथैव मोक्ष-भगवत्साक्षात्कार-शास्त्रजन्यज्ञानेषु भगवत्प्रसादस्य साधनत्वं प्रतिपादयतामपि वचनानां भगवत्प्रसादेऽपि तारतम्याद्यङ्गीकारेण व्यवस्था कार्या ।

जिज्ञासाधिकरणश्रुतप्रकाशिकायाम्—

"'जायमानं हि पुरुषं यं पश्येन्मधुसूदनः ।
सात्विकः स तु विज्ञेयः स वै मोक्षार्थचिन्तकः ।
पश्यत्येनं जायमानं ब्रह्मा रुद्रोऽथवा पुनः ।
रजसा तमसा चास्य मानसं समभिप्लुतम् ॥'

इति वचनाच्च तत्वार्थज्ञानस्य भक्तिप्रीतभगवत्कटाक्षसापेक्षत्वं ज्ञायते ॥"

इति शास्त्रजन्यतत्वार्थज्ञाने भगवत्प्रसादस्यापेक्षा तत्र भक्तेर्हेतुत्वं चानुगृहीतं व्यासार्यैः । तत्वार्थज्ञानोपयोगिसात्विकतास्तिक्यादिजनकजायमानकटाक्षमूलभूतो भगवत्प्रसादो भक्तिहेतुक इत्यनेन श्रुतप्रकाशिका-

ग्रन्थेन सिद्धं भवति । सा च भक्तिर्न तच्छरीरावच्छिन्ना भवितुमर्हति, जायमानदशावच्छिन्नभगवत्कटाक्षानुकूलभूतभगवत्प्रसादं प्रति तत्पूर्वभावि- भक्तेरेव हेतुत्वसम्भवात् । तथा च जन्मान्तरानुष्ठिताऽपूर्णा भक्तिरेव सेति वक्तव्य भवति । अपूर्णयापि तया भगवतस्तावान्प्रसादो भवति, यावता सात्विकतास्तिक्यादिहेतुभूतं कटाक्षविशेषं जायमानदशायां स करोति । अपूर्णयोगस्यापि तत्प्रभावेन योगयोग्यकुलजन्मादिवदपूर्णभ- क्तेरपि जन्मान्तरे पुनरपि भक्त्यनुष्ठानोपयोगिसात्विकत्वादिहेतुजायमान- कटाक्षप्रयोजकभगवत्प्रसादसाधनत्वं युक्तम् ।

अयं च भगवत्प्रसादो न भगवद्दर्शनादिहेतुभूतभगवत्प्रसादेन तुल्यो भवितुमर्हति, मुक्तिहेतुभूतस्य तत्त्वज्ञानहेतुभूतस्य च भगवत्प्रसादस्य तारतम्यावश्यम्भावात् । प्रसादस्य ज्ञानविशेषरूपत्वेऽपि तत्र वैलक्ष- ण्यानङ्गीकारे, पुत्रादिकामनया तदुपयोगिकर्मविशेषेण समाराधितस्य भगवतः प्रसादेन पुत्रादिकमिव मोक्षमपि स लभेताराधकः । स्वल्पप्र- यत्नेनैव सर्वे मुक्तिं लभेरन् । तस्माद्भगवत्प्रसादेऽपि भक्ताविव पर्वभेदो- ऽवश्यमङ्गीकर्तव्य एव ।

तथाचाविशेषेण दर्शनशास्त्रजन्यज्ञानयोस्तुल्यतया भगवत्प्रसादहेतु- कत्वमसङ्गतमेव । तथा वेदैकवेद्यत्वस्य यथाश्रुतस्य **"मया प्रसन्नेन तवार्जुनेदं रूपं परं दर्शितमात्मयोगात् ।"** इत्यनेन विरोधश्च त्वद्रीत्या सुदुष्परिहर एव ।

" 'न चागमैकसंवेद्यत्वेन विरोधः' इत्याशङ्क्य, 'यमेवैष वृणुते तेन लभ्यः' इति श्रुते"रिति समाधानं चादसीयं स्वाचार्यसिद्धान्तान- भिज्ञतानिबन्धनमिति प्रतीयते । **"दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम् ।"** इत्यादिना प्रतिपादितस्यार्जुनलब्धस्य भगवद्दर्शनस्य

मूलरूपविषयकत्वाभाव एतन्मतग्रन्थेषूपपाद्यते । पुरुषोत्तमाचार्यविरचितेऽणुभाष्यस्य प्रकाशे द्वितीयाधिकरणे—**"न च गीतोक्तविश्वरूपदर्शनादिविरोधः, तस्य मूलरूपत्वाभावात् ।"** इतिह्युक्तम् । वेदैकवेद्यत्वं च मूलरूपमिति सङ्केतितस्यैवाभिप्रेतम् । तत्कथं विश्वरूपदर्शनेन वेदैकवेद्यत्वस्य विरोधप्रसङ्गः ।

**यदपि**—"तेन 'न वेदयज्ञाध्ययनैर्न दानैर्न च क्रियाभिर्न तपोभिरुग्रैः । एवं रूपः शक्य अहं नृलोके द्रष्टुं त्वदन्येन कुरुप्रवीर ॥' इत्यादेर्न 'सर्वे वेदा यत्पदमामनन्ति' 'वेदैश्च सर्वैरहमेव वेद्यः' इत्यादिश्रुतिस्मृतिविरोधः ।"—**इति;**

तदपि भ्रान्तवचनम्, विरोधस्यैवाप्रसक्तेः । **"वेदैश्च सर्वैः"** इत्यादिकं शास्त्रं ब्रह्मणः सर्ववेदवेद्यत्वं प्रतिपादयति, **"न वेदयज्ञाध्ययनैः"** इत्यादिवचनं च भगवत्साक्षात्कारस्य वेदाध्ययनयज्ञदानतपःप्रभृतिभिरसाध्यत्वं वक्ति । कथमनयोर्विरोधः ? वेदवेद्यत्वं च वेदजन्यबोधविषयत्वमात्रं, तच्च परोक्षज्ञानविषयत्वरूपम् । दर्शनं च साक्षात्कारः । तत्र साक्षात्कारस्य वेदाध्ययनादिभिरसाध्यत्वं प्रतिपादयतो वचनस्य ब्रह्मणो वेदवेद्यत्वं प्रतिपादयतो वचनस्य च विरोधः केनापि प्रकारेण नावगम्यते । एवं स्थिते विरोधाशङ्का तत्समाधानं चान्धकारे रज्जुसर्पभ्रान्त्या दण्डोद्यमनतुल्यम् ।

**यत्तु**—"तथा च तत्तच्छास्त्रीयपदार्थानां तत्तदाचार्यप्रसादैकसंप्रतिपत्तव्यत्वेऽपि न यथा तत्तदेकप्रतिपाद्यत्वसंवेद्यत्वव्याहतिस्तथेहापि न किंचित्क्षतिविक्षुमितम् ।"—**इति;**

तदपि न, आचार्यप्रसादभगवत्प्रसादहेतुतयोर्भिन्नरूपत्वात् । प्रसन्नो ह्याचार्यो विद्योपदेशेन तदर्थोपदेशादिना च शिष्यायोपकरोतीति प्रसिद्धमेतत् । तत्राचार्य उपदेशेन पदपदार्थव्युत्पादनादिमुखेन शास्त्रीयपदार्थबोधं जनयतीत्याचार्यप्रसादस्य दृष्टविधयोपयोगो भवितुमर्हति ।

तथाचाचार्यप्रसादस्य शक्तिग्रहादिसामग्रीमध्ये कथंचित्प्रवेशसम्भवात्प्रत्येककारणत्वमेवानावश्यकम् । भगवत्प्रसादस्य तु न शाब्दबोधसामान्यसामग्रीमध्ये वा वेदजन्यशाब्दबोधविशेषसामग्रीमध्ये वाऽऽचार्यप्रसादवत्प्रवेशः संभवति । अतश्चात्राचार्यप्रसादद्दृष्टान्तो न घटते ।

**यदुक्तम्**—"योगं विभजमानानामन्यथाचार्थापयतां मते दोषास्तु भाष्य प्रकाशाभ्यां सुलभावगमाः ।"—**इति** ।

तत्र वक्तव्यांशाः सर्वेऽप्यस्मदीय**कण्टकोद्धारे**—विस्तरेण प्रतिपादिता इति नात्र विस्तरं कर्तुमिच्छामः । प्रकृतोपयुक्तं तु किमपि लिखामः । अस्य—पुरोवर्तिनः प्रपञ्चस्य, जन्मादि—जन्मप्रभृतयः सर्वे भावविकाराः, यतः, तद्ब्रह्म इति वा; आद्यस्य—आकाशस्य, जन्मादि यतस्तद्ब्रह्म, इतिवा सूत्रस्य ब्रह्मलक्षणप्रतिपादकत्वाङ्गीकारे**'शास्त्रयोनित्वा'**दित्यस्यानन्वयापत्तिः । यतोऽस्य जन्मादि तद्ब्रह्मेत्येतावता वाक्यस्य परिसमाप्तत्वात्, तत्र **'शास्त्रयोनित्वा'**दित्यस्यान्वयासम्भवात् । ब्रह्म कर्तृ **'शास्त्रयोनित्वा'** दित्यध्याहारेणान्वयाङ्गीकारेऽपि **'शास्त्रयोनित्वा'** दित्ययुक्तं, **'शास्त्रा'** दित्येतावतैव विवक्षितलाभात् । **"जन्माद्यस्य यतः"** इत्यत्र**'यतः'** इति प्रसिद्धवन्निर्देशात्, तेन च **"यतो वा इमानि भूतानि जायन्ते"** इत्यादिश्रौतप्रसिद्धेः सूचनेन ब्रह्मणो जगत्कारणत्वस्य श्रुतिसिद्धत्वलाभात्, **'शास्त्रयोनित्वा'**दित्ययं भागः कृत्स्नोऽप्यस्मिन्पक्षे व्यर्थः । ब्रह्मणो जगत्कारणत्वांशे श्रौतप्रमाणसद्भावस्य कण्ठरवेणोक्तौ तात्पर्याङ्गीकारेऽपि वा **"श्रुतत्वाच्च"** **"स्मृतेश्च"** इत्यादिव**'च्छास्त्रा'**दित्येतावदेव निर्देष्टव्यम्, न तु **'शास्त्रयोनित्वा'**दिति । यतोऽस्य जन्मादि तद्ब्रह्म, ब्रह्म कर्तृ **'शास्त्रयोनित्वा'**दिति द्वेधान्वयाङ्गीकारे वाक्यभेदः स्यात् । तावता चैकसूत्रत्वाङ्गीकारस्य निष्फलत्वम् । ब्रह्मास्य कर्तृ

**'शास्त्रयोनित्वा'**दिति निर्देष्टव्ये, **"जन्माद्यस्य यतः"** इति यच्छब्दघटितनिर्देशं कुर्वता **"यतो वे"** त्यादिश्रौतप्रक्रियाह्यनुसृता बादरायणेन । तादृशश्रुत्यनुगुणार्थकतां सूत्रस्य विहाय, **"आत्मन आकाशः सम्भूतः"** इत्यादिश्रुत्यर्थविचारपरत्वाङ्गीकारश्चायुक्तः । ब्रह्मलक्षणप्रतिपादनाय प्रवृत्तस्य सूत्रस्य जगज्जन्मादिकारणत्वरूपब्रह्मलक्षणपरतां परित्यज्याकाशकारणत्वप्रतिपादकतावर्णनं चायुक्तम् । आद्यशब्देनाकाश ग्रहणं चायुक्तम्, सृज्यपदार्थेषु मध्ये आकाशस्याद्यत्वाभावात्, आकाशात्पूर्वं सृष्टा महदहङ्कारादयः सन्त्येव । तस्मादेकसूत्रत्वमुक्तार्थकत्वं चानुपपन्नम् ।

**यदप्युक्तम्**—"श्रीमद्वैयासिकी समाधिभाषापि प्रतिपित्सितमेवार्थमुपवर्णयति—**'नमो नमस्तेऽस्त्वृषभाय सात्वतां विदूरकाष्ठाय मुहुः कुयोगिनाम् ।'** इति" **इति ।**

तदपि न, अत्र **'कुयोगिनां विदूरकाष्ठाय'** इत्यादिना परमपुरुषस्य कुयोगिदुर्लभताप्रतिपादनेऽपि वेदेतरावेद्यत्वसहितवेदवेद्यत्वरूपवेदैकवेद्यत्वस्याप्रतिपादनात् । कुयोगिनां दुर्लभत्वकथनस्य वेदेतरवेद्यत्वसामान्याभावकथनरूपत्वासम्भवात् । प्रत्युत 'कुयोगिना' मित्युक्त्या सुयोगिनां सुलभताया एव सूचनात् । अन्यथा कुशब्दवैयर्थ्यात् ।

**यदपि**—"तत एव षष्ठस्यैकादशे—**न योगसिद्धीरपुनर्भवं वा समञ्जस त्वा विरहय्य काङ्क्षे'** इत्युक्त्वा, **'अजातपक्षा इव मातरं खगाः स्तन्यं यथा वत्सतराः क्षुधार्ताः । प्रियं प्रियेव व्युषितं विषण्णा मनोऽरविन्दाक्ष दिदृक्षते त्वाम् ॥'** इति भगवद्दिदृक्षां प्रकाशयन्योगसिद्धेरपि तद्दर्शनसाधनत्वाभावमवगमयति वृत्रः ।"—**इति ।**

तदपि भ्रान्तवचनम्, उदाहृतवचनस्यान्यार्थकत्वात् । **'न योगसिद्धी'** रित्यादिश्लोकेऽपुनर्भवसहपठिता योगसिद्धिर्हि योगावान्तर-

फलभूताणिमादिसिद्धिः । योगसिद्धीर्वा—अपुनर्भवं वा त्वा विरहय्य न काङ्क्षे—इत्यस्य—त्वां परित्यज्य योगसिद्धीरपि न काङ्क्षे, केवलमपुनर्भवमपि न काङ्क्षे, इत्यर्थः । यद्यपि 'अजातपक्षा' इत्यादिश्लोकेन वृत्रस्य भगवद्दिदृक्षावगम्यते, तेन च तावता तस्य भगवद्दर्शनं न जातमिति च लभ्यते । तावता योगसिद्धीनां भगवद्दर्शनसाधनत्वाभावः कथं प्रतीयेत ? योगसिद्धीनामणिमादीनां भगवद्दर्शनसाधनत्वप्रसक्तिरेव का ? यस्याभावः प्रतिपाद्येत । परमकाष्ठापन्नस्य भक्तियोगस्य खलु भगवद्दर्शनसाधनत्वं, न तु योगफलभूतायाः सिद्धेः । यद्यपि योगावस्थाविशेषाणामपि कथंचित्सिद्धिपदवाच्यत्वं स्यात्, परं त्वत्रत्यसिद्धिपदमपुनर्भवपदसाहचर्यात्फलभूतसिद्धिपरमेवावतिष्ठते । त्वां विनान्याः का अपि सिद्धीर्न काङ्क्षे—इति हि वक्तुस्तात्पर्यं, नतु योगस्य भगवद्दर्शनसाधनत्वाभावप्रतिपादने ।

भगवता पतञ्जलिना विभूतिपादे षोडशादिसूत्रजातेनातीतानागतज्ञानादियोगसिद्धयो वर्ण्यन्ते । ता एवात्र 'न योगसिद्धी' रित्यत्र योगसिद्धिपदेन विवक्षिताः । केवलपरमपुरुषसाक्षात्कारकामस्य पुरुषस्य योगसिद्धयो ह्येताः प्रतिबन्धकरूपा अनिष्टावहा भवन्तीति तदकाङ्क्षा युक्तैव ।

यदपि—"**'सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम ।**
**देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः ॥'** इति
भगवद्वचनेन च कैमुतिकैकगम्यः स एवार्थः स्फोर्यते ।" **इत्यादि ।**

तदपि न, अर्जुनेन दृष्टस्य भगवद्रूपस्य देवैरदृष्टत्वकथनमात्रेण भगवतोऽलौकिकप्रत्यक्षवेद्यत्वाभावसाधनासम्भवात् । स ह्यस्य प्रतिज्ञातः साधनीयोऽर्थः । न च तस्य साधकं किमपि पदमत्र दृश्यते, सुदुर्द-

र्शत्वमात्रं कामं लभ्येत । अत्र श्लोके—अपिना किमुत मानवाः परिमितज्ञानशक्त्यादिशालिन इति सूच्यते । एतेन देवत्वमनुष्यत्वादिकमप्रयोजकम्, अनन्यभक्तियोग एव भगवद्दर्शनप्रयोजक इति सूच्यते । अत एवोत्तरत्र **"नाहं वेदैः"** इत्यादिना साधनान्तरं निषिध्य **"भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन । ज्ञातुं द्रष्टुं च तत्वेन प्रवेष्टुं च परंतप ॥"** इत्यनन्यभक्तियोगस्य दर्शनसाधनत्वमुच्यते । अनन्यभक्तियोगैकदर्शनीयं भगवतो रूपमेव चार्जुनाय प्रसन्नेन भगवता प्रदर्शितमिति च स्पष्टम् । प्रकरणेन चायमेवार्थो लभ्यते । **"सुदुर्दर्शमिदं रूपम्"** इत्यादिनार्जुनेन साक्षात्कृतस्य रूपस्य सुदुर्दर्शत्वमभिधाय, **"नाहं वेदैः"** इत्यादिना तदुपपाद्य, **"भक्त्या त्वनन्यया शक्य"** इत्यादिना तस्यैवानन्यभक्तियोगदर्शनीयत्वं ह्यभिहितम् । तस्मात् **"सुदुर्दर्श"**मित्यत्र कैमुतिकन्यायेन वाऽन्यथा वा भगवतोऽलौकिकप्रत्यक्षविषयत्वाभावस्य न कथंचिदपि स्फोरणसम्भवः ।

**एतेन**—"अन्यथा पुनः स्वारस्यभङ्गादपेरनतिप्रयोजनत्वापातः सुदुष्परिहरः। नच योग्यन्तरं तदर्थः, विनिगमनाविरहात् । प्रत्युत प्रपञ्चितैकवाक्यतया तदर्थस्य तदनुगृहीतत्वात् ।"—

इति, परास्तम्, "एष एव च पक्षो ज्याया"नित्यारभ्य प्रपञ्च्यमानस्य भगवतोऽलौकिकप्रत्यक्षावेद्यत्ववादस्यात्र श्लोके साधकादर्शनात् । अनेन महाशयेन हि तस्यैवार्थस्य कैमुतिकन्यायेनैतद्वचनस्फोरितत्वं कथ्यते । नचात्रापि शब्दसंकलितेन **'देवा'** इत्यनेन भगवतो योगिनामलौकिकप्रत्यक्षावेद्यत्वं कैमुतिकन्यायेन वान्यथा वा स्फोर्येत, कैमुतिकन्यायेन देवापेक्षयाऽल्पयोग्यताशालिनां मनुष्यादीनामसुलभदर्शनत्वमेव परं लभ्येत । वाक्यैकवाक्यतया तु परमनन्यभक्त्यैकप्रसादनीयपरमपुरुषप्रसादहेतुकत्वं भगवत्साक्षात्कारे लभ्यते, नान्यत्किमप्येतदभिप्रेतम् ।

किंचात्र "**देवा अपि नित्यं दर्शनकाङ्क्षिणः**" इत्येतद्भगवतोऽलौकिकप्रत्यक्षवेद्यत्वाभावपक्षस्य विरोधि, न तु साधकम्, दर्शनयोग्यस्यैव दर्शनकाङ्क्षायाः सम्भवात् । देवानां दर्शनकाङ्क्षाकथनेन भगवद्रूपस्य दर्शनयोग्यतालाभात् । न ह्यसम्भावितं किमपि काङ्क्षते विचारवान्पुरुषः । वस्तुत एव चेद्भगवद्रूपमदर्शनीयम्, कथं पुनर्विवेकिनो देवास्तद्दर्शनं काङ्क्षेरन् । तदेतद्वचनावष्टम्भेन भगवतोऽलौकिकप्रत्यक्षवेद्यत्वाभावसाधनं भ्रान्तिकार्यमेव ।

यत्तु—यादवप्रकाशीयम् "एतद्धि दुर्लभतरम्" इत्यादिश्लोकव्याख्यानमुदाहृत्य,

"नापि तद्यथोक्ताभ्युपगमेऽपि कुप्यति, सिद्धयोगसिद्धीनामपि तादृशफलोपलम्भस्य प्राकृतप्रतीकपरित्यागनान्तरीयकत्वस्य ततः स्फुटत्वात्"

इत्युक्तम्, तद्रज्जुसर्पभ्रान्त्या दण्डोद्यमनतुल्यम् । श्लोको ह्ययमपूर्णयोगानां मृतानां योगबललभ्यभाविजन्मप्रशंसापरः । "**अथवा योगिनामेव कुले महति धीमताम् ।**" इति पूर्वार्धम् । योगयोग्यानां योगिनां च कुले जन्म साधारणजनानां दुर्लभं योगमाहात्म्याल्लभते भ्रष्टयोगोऽपि पुरुषः । एतदधिकृत्य प्रवृत्तम्—"इदमल्पीयसीं योगसिद्धिं गतस्य मृतस्य फलम् ।" इति यादवप्रकाशीयम् । अस्मिन्श्लोके योगोपक्रम एव भ्रष्टयोगस्य फलमुक्तमिति, ततोऽप्युत्तरोत्तरयोगदशासु भ्रष्टानां फलं स्वयं दर्शयितुं प्रवृत्तो यादवप्रकाशः, "**यदि प्रथमां योगसिद्धिम्**" इत्यारभ्य, "**यदि पूर्णां योगसिद्धिं गतो म्रियते भगवत्सायुज्यं गतो मुक्तः परमैश्वर्ययुक्तो भवति ।**" इत्यन्तेन योगशास्त्रप्रसिद्धान्यन्यान्यपि मरणानन्तरभावीनि फलानि प्रादर्शयत् । इदं च व्याख्यानं योगिनां मरणानन्तरभाविफलमात्रप्रदर्शनपरमिति स्पष्टं तत्र तत्र '**म्रियते**' इति

पदोपादानेन । प्रसक्तं चेदानीं योगिनो म्रियमाणशरीरस्य सिद्धयोगस्यापि भगवत्साक्षात्कारासम्भवस्थापनम् । **"एष एव च पक्षो ज्यायान्"** इति चानेनारम्भे प्रतिज्ञातम् । मरणानन्तरं दर्शनयोग्यस्यापि पदार्थस्य म्रियमाणे शरीरेऽप्रत्यक्षता दृष्टा । स्वर्गादीनां तथात्वं प्रसिद्धम् । तस्मात्प्रतिज्ञातार्थेन सह व्याख्यानस्यास्य विरोधाशङ्कायाः कथैव का ? योगिनां मृतानामेव हि फलं प्रदर्शयति व्याख्यानमिदम् । श्लोकस्यैव मरणानन्तरभाविफलप्रदर्शनपरत्वात् तद्व्याख्यानस्यापि तथाविधफलप्रदर्शनपरत्वमेव स्वरससिद्धम् । तदेवं स्थिते—अकारणमेव शङ्कामुत्थाप्य समाधानप्रयतनमस्य नून रज्जुसर्पभ्रान्त्या दण्डोद्यमनम् ।

**यत्तु**—"तत्रापि तत्प्रसादस्य साधनत्वात्"

इति परिहारान्तरमुक्तम्, तथा वदतोऽस्य किं तात्पर्यमिति न जानीमः । तत्रापीत्यस्य मरणानन्तरभाविफलविशेषेऽपीत्यर्थे, तत्र भगवत्प्रसादस्य साधनताप्रदर्शनं, कस्य प्रसक्तस्य दोषस्य परिहाराय ? तत्र भगवत्प्रसादस्य साधनत्वमस्तु वा मावा, कोत्र लाभः प्रकृते हानिर्वा । भगवतो योगिप्रत्यक्षविषयत्वाभावप्रतिज्ञायां मरणानन्तरं विनैव भगवत्प्रसादं भगवद्दर्शनं भवतीत्यङ्गीकारे वा को दोषः प्रसज्यते, यत्परिहारार्थं तत्रापि भगवत्प्रसादस्य साधनता प्रदर्श्यते । सति भगवत्प्रसादे शरीरे म्रियमाण एव योगिनो भगवद्दर्शनं भवितुमर्हतीत्यङ्गीक्रियते न वा ? आद्ये**'स एव पक्षो ज्यायान्'** इति प्रतिज्ञाऽयुक्ता, योगिप्रत्यक्षाविषयत्वं खलु प्रतिज्ञातोऽर्थः । योगिप्रत्यक्षं च भगवत्प्रसादसद्भावेऽपि स्वमर्यादां नातिक्रामति । अन्त्ये च 'मरणानन्तरभाविभगवद्दर्शने भगवत्प्रसादसाधनकता किमर्थं प्रदर्श्यते । नहि तद्योगिप्रत्यक्षमित्युच्यते । तद्धि मुक्तप्रत्यक्षम् । मुक्तानां सर्ववस्तुवि-

षयकः साक्षात्कारो न योगिप्रत्यक्षशब्दाभिलप्यः। तथा च मुक्तप्रत्यक्ष-मादाय प्रकृतप्रतिज्ञातार्थभङ्गाप्रसक्त्या तत्र भगवत्प्रसादसाधनकत्व-प्रदर्शनं प्रकृतानुपयुक्तमिति सिद्धम्।

यदप्युक्तम्—"वस्तुतस्तूभयस्य वेदार्थस्य लौकिकेतरशब्दातिरिक्तलौकिकालौकिकोभयप्रमाणसंवेद्यतायाः पूर्वोत्तरतन्त्रयोस्तत्तदधिकरणेषु परिहृतत्वाच्छास्त्रैकसमधिगम्यमेव नित्यनिर्दुष्टाद्भुताचिन्त्याजर्यनिरङ्कुशानिरतिशयैश्वर्यशक्तिमत्सर्वज्ञं ब्रह्म" इति।

तदपि मन्दम् लौकिकेतरशब्दातिरिक्तलौकिकालौकिकोभयप्रमाणसंवेद्यत्वाभावासिद्धेः। तथाहि—यद्यपि पूर्वमीमांसायां **"चोदना लक्षणोऽर्थो धर्मः।"** इति चोदनैकप्रमाणकत्वं धर्मलक्षणमुक्त्वा, **"सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात्।"** इति सूत्रेण प्रत्यक्षस्य धर्मे प्रमाणत्वासम्भव उपपादितः, तथापि न तेन धर्मस्य योगिप्रत्यक्षवेद्यत्वाभावोऽपि सिद्धयेत्, सूत्रस्य तदर्थप्रतिपादकत्वाभावात्। सूत्रगतः प्रत्यक्षशब्दो हीन्द्रियार्थसंनिकर्षजन्यविद्यमानार्थविषयकप्रत्यक्षमात्रपर इति स्पष्टं **"सत्सम्प्रयोगे"** इत्यादिशब्दैः। लोकसिद्धं यत्प्रत्यक्षं तत्सत्सम्प्रयोगजं—सति इन्द्रियार्थसम्प्रयोग एव जायमानं दृष्टम्, तेन तद्विद्यमानोपलम्भनमिति भविष्यति धर्मे न प्रमाणम्, इति सूत्रार्थः। तथाचाह भाष्यकारः—**"प्रत्यक्षं तावदनिमित्तम्। किं कारणम्? एवंलक्षणकं हि तत्—सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षम्, सति—इन्द्रियार्थसम्बन्धे या पुरुषस्य बुद्धिर्जायते तत्प्रत्यक्षम्, भविष्यंश्चैषोऽर्थो न ज्ञानकालेऽस्तीति। सतश्चैतदुपलम्भनं नासतः। अतः प्रत्यक्षमनिमित्तम्।"**—इति।

स्पष्टीकृतं चेदं भट्टकुमारिलेन—

“प्रत्यक्षं यज्ञने सिद्धं तस्यैवंधर्मकत्वतः ।
विद्यमानोपलम्भत्वं तेन धर्मेऽनिमित्तता ॥
एवंलक्षणकत्वं च न स्वरूपविवक्षया ।
एवंलिङ्गकमित्येतद्भाष्यकारेण वर्ण्यते ॥” इति ।

योगिप्रत्यक्षं च न विद्यमानमात्रोपलम्भनं, योगिनामतीतानागतपदार्थदर्शिताया: प्रसिद्धत्वात् । तेन नेदं सूत्रं धर्मस्य योगिप्रत्यक्षविषयत्वाभावसाधनपरम् ।

यद्यपि केचन मीमांसका योगिप्रत्यक्षमेव नाङ्गीकुर्वन्ति, अङ्गीकुर्वन्तोऽपि च केचन लौकिकप्रत्यक्षवदेव विद्यमानपदार्थमात्रविषयकं मन्यन्ते, तेन योगिप्रत्यक्षाविषयत्वमपि धर्मस्य प्रकृतसूत्रेणैव साधितमित्यभिप्रयन्ति च, तथापि नास्मादृशामात्मपरमात्माङ्गीकर्तॄणां योगिप्रत्यक्षं नाम नास्ति ! तेह्यात्मास्तित्वमेवापलपन्तीति न तेषां योगिप्रत्यक्षानङ्गीकारे तथाविधस्य तस्याङ्गीकारे वा किमप्यत्याहितं नाम । वयं त्वात्मसाक्षात्कारफलकं योगमभ्युपगच्छन्तो योगिप्रत्यक्षस्यातीतानागतपदार्थविषयकत्वमप्यभ्युपगच्छाम एवेति न तद्विषयत्वनिराकरणपरमिदं सूत्रमङ्गीकुर्मः । योगिप्रत्यक्षस्य विद्यमानोपलम्भनत्वसाधकमनुमानं तैरित्थं वर्ण्यते—योगिप्रत्यक्षं विद्यमानोपलम्भनं—प्रत्यक्षत्वात्, अस्मदादिप्रत्यक्षवत्, इति । यथोक्तं वार्तिके—

“न लोकव्यतिरिक्तं हि प्रत्यक्षं योगिनामपि ।
प्रत्यक्षत्वेन तस्यापि विद्यमानोपलम्भनम् ॥
सत्सम्प्रयोगजत्वं वाप्यसत्प्रत्यक्षवद्भवेत् ॥”—इति ।

न चेदमनुमानमस्मत्पक्षे निर्दोषं भवति, भूतं भवद्भविष्यच्च सर्वं

साक्षात्कुर्वन्तं सर्वज्ञं परमपुरुषमङ्गीकुर्वतामस्माकं पक्षे परमपुरुषसाक्षात्कार एव व्यभिचारात् । न खलु प्रत्यक्षत्वेनेश्वरीयप्रत्यक्षेऽपि विद्यमानोपलम्भनत्वं सत्सम्प्रयोगजन्यत्वं वा साधयितुं शक्यते, "**पश्यत्यचक्षुः**" इत्यादिनेन्द्रियानधीनसर्ववस्तुसाक्षात्कारक्षमतया प्रतिपाद्यमानस्य तस्य भूतभविष्यद्वस्तुविषयके प्रत्यक्षे तदनुमानासम्भवात् ।

महर्षिणा च पतञ्जलिना योगदर्शने विभूतिपादे योगिनामतीतानागतदर्शित्वं स्पष्टमेव सूत्रितं वर्तते ।

तत्र "**त्रयमेकत्र संयमः ।**" इति चतुर्थसूत्रेण धारणाध्यानसमाधीनामेकस्मिन्विषये प्रवर्तमानानां संयमशब्दव्यपदेश्यत्वमुक्त्वा. तस्य सिद्धीः प्रतिपादयन्—"**परिणामत्रयसंयमादतीतानागतज्ञानम् ।**" इति षोडशसूत्रेणातीतानागतज्ञानं तत्फलतया प्रत्यपादयत् । भाष्येच—"**धारणाध्यानसमाधित्रयमेकत्र संयम उक्तस्तेन परिणामत्रयं साक्षात्क्रियमाणमतीतानागतज्ञानं तेषु सम्पादयति ।**" इत्युक्तम् । वार्तिककृता चात्र विशेष उक्तः—

"**अन्यविषयकसंयमात्प्रतिनियतपदार्थान्तरसाक्षात्कारश्च योगजधर्मबलाद्भवतीति शास्त्रप्रामाण्यादवधार्यते, धर्मविशेषात्स्वर्गविशेषवत्, तपोजन्यसिद्धिवत्, 'भुवनज्ञानं सूर्ये संयमात्' इति वक्ष्यमाणसिद्धिवच्च ।**"—इति ।

नन्वेवं धर्मस्य योगिप्रत्यक्षविषयत्वे चोदनालक्षणत्वं कथमुपपद्यताम् ? इति चेत्, इदमत्र बोध्यम्—धर्मलक्षणं तावज्जैमिनिनास्मदादीनां धर्मानुष्ठानाधिकारिणां धर्माधर्मपरिज्ञानोपयोग्युक्तं, तत्र चास्मदादीनां प्रत्यक्षाद्यगम्यत्वमेव मुख्यतयाभिप्रेतम् । अनुष्ठानोपयोगि धर्मज्ञानं चोदनयैव भवति नान्येन प्रमाणेनेति च तात्पर्यम् । योगिनां प्रत्य-

क्षात्मकं धर्मज्ञानं च नानुष्ठानोपयोगि, आगमावधारितानुष्ठानजन्यत्वात्तदीयप्रत्यक्षस्य । अत एवेश्वरप्रत्यक्षविषयत्वमादायापि न दोषः; तस्याप्यस्मदीयानुष्ठानानुपयोगित्वात् । इति ।

तदेतत्सेश्वरमीमांसायां कवितार्किकसिंहेन श्रीमद्वेङ्कटनाथाचार्येण स्पष्टमुक्तम्—"**यत्तु धर्मवीर्यप्रसूतमृषीणां योगिनां च प्रत्यक्षं शास्त्रबलादभ्युपगतं, तन्न तेषामनुष्ठानार्थम्, आगमावधारितानुष्ठानजन्यत्वात्, आगमार्थतयैव धर्मादिप्रत्यक्षीकरणात् । नाप्यस्मदादीनामनुष्ठानार्थं, परप्रत्यक्षस्य परानुष्ठानानुपकारित्वात् ।**"—इति,

"**अनुष्ठातृदशापन्नपुरुषापेक्षयात्विदम् ।**
**सत्सम्प्रयोगजन्यत्वमशाध्यक्षादि सुस्थितम् ॥**
"**प्रत्यक्षमस्मदादीनां पक्षोऽत्राभिमतस्ततः ।**
**न भागासिद्धता नापि बाधो हेत्वोरिहोक्तयोः ॥**"—इति च ।

एवं च चोदनैकप्रमाणकत्वरूपधर्मलक्षणघटकं चोदनेतराप्रमाणकत्वमनुष्ठानोपयोगिचोदनेतरप्रमाणजन्यप्रमित्यविषयत्वरूपं फलितम् । योगजप्रत्यक्षस्य वेश्वरीयप्रत्यक्षस्य वानुष्ठानोपयोगित्वाभावान्न ते आदाय लक्षणस्यानुपपत्तिः ।

तस्माद्धर्मस्य लौकिकेतरशब्दातिरिक्तलौकिकालौकिकप्रमाणावेद्यत्वं न सम्भवतीति सिद्धम् ।

ब्रह्मणोऽपि चालौकिकशब्दातिरिक्तलौकिकालौकिकप्रमाणावेद्यत्वं न सम्भवति, तस्य योगजप्रत्यक्षविषयत्वात् । अन्ततो नित्यमुक्तानां भगवतश्च साक्षात्कारे विषयत्वात्, विशुद्धमनोग्राह्यत्वाच्च । "**नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष**

वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम् ॥" इति श्रुतौ भक्तियोगादिना प्रसन्नो भगवांस्तादृशभक्तियोगादिनिष्ठपुरुषाय दर्शनं ददातीति प्रतिपादनात्तत्पुरुषीयसाक्षात्कारविषयताया आवश्यकत्वात् ।

"नाहं वेदैर्न तपसा न दानेन न चेज्यया ।
शक्य एवं विधो द्रष्टुं दृष्टवानसि मां यथा ॥
भक्त्या त्वनन्यया शक्य अहमेवं विधोऽर्जुन ।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप ॥"

इति भगवद्गीतैकादशाध्यायेऽनन्यभक्तियोगस्य ज्ञानदर्शनप्रवेशहेतुताकथनेन, दर्शनस्य साक्षात्काररूपतया तादृशानन्यभक्तियोगनिष्ठपुरुषीयसाक्षात्कारविषयताया आवश्यकत्वात् । "न चक्षुषा गृह्यते नापि वाचा ।" इति बाह्येन्द्रियग्राह्यत्वं निषिध्य, "मनसा तु विशुद्धेन" इति विशुद्धमनोग्राह्यतायाः श्रुतौ प्रतिपादनाच्च । इदमेवच विशुद्धमनोग्राह्यत्वमभिप्रेत्य "मनोमयः प्राणशरीरो भारूपः" इति श्रुतौ ब्रह्मणो मनोमयताप्रतिपादनाच्च । मुक्तानां नित्यानां च साक्षात्कारविषयत्वाच्च । ब्रह्मणः स्वीयसाक्षात्कारविषयत्वाच्च ।

यद्यप्यत्र भगवदीयसर्वविषयकसाक्षात्कारस्य नित्यत्वेन तस्यालौकिकप्रमाणजन्यज्ञानत्वेन ग्रहणासम्भव इति वक्तुं शक्यम्, तथापि लौकिकेतरशब्दातिरिक्तलौकिकालौकिकप्रमाणजन्यज्ञानविषयत्वाभावस्य तेन रूपेण विवक्षापेक्षया लौकिकालौकिकप्रत्यक्षानुमित्यविषयत्वेन लघुरूपेण विवक्षणीयतया ईश्वरीयसाक्षात्कारमादायापि दोषप्रसक्तिः । यदि त्वेतद्दोषवारणायैव गुरुरूपमेवाद्रियत इत्युच्यते, तथापि मुक्तानां साक्षात्कारस्य वारणं न सम्भवति । संसारिचेतनसम्बन्धित्वेन ज्ञानं विशेष्य तद्वारणेऽपि योगिप्रत्यक्षस्य तावताप्यवारणात्तद्विषयतामादाय, विशुद्धमनोग्राह्यतामा-

दाय च दोषस्तदवस्थः । एतादृशानि विशेषणानि चं न ग्रन्थकृता प्रवेशितानि, लौकिकेतरशब्दातिरिक्तलौकिकालौकिकप्रमाणासंवेद्यत्वमेव च तेन प्रतिज्ञातम् ।

प्रसिद्धं चेतिहासपुराणेषु बहूनां महात्मनां तपःप्रभृतिभिर्भगवतो दर्शनम् । औत्तानपादेर्ध्रुवस्य तपसा भगवद्दर्शनं महोन्नतफलप्राप्तिश्च विष्णुपुराणे वर्ण्यते—

"श्रुत्वेत्थं गदितं तस्य देवदेवस्य बालकः ।
उन्मीलिताक्षो ददृशे ध्यानदृष्टिंहरिं पुरः ॥ ४५ ॥
शङ्खचक्रगदाशार्ङ्गवरासिधरमच्युतम् ।
किरीटिनं समालोक्य जगाम शिरसा हरिम् ॥ ४६ ॥

[ विष्णुपु. अं. १ अ. १२ ] इति ।

ब्रह्मणो विशुद्धमनोग्राह्यत्वं च वल्लभमतानुयायिनामप्यनुमतमित्यवगम्यते । ब्रह्मसूत्रभाष्यद्वितीयाधिकरणटीकायां भाष्यप्रकाशे केवलोपनिषद्वेद्यत्वविचारावसरे पुरुषोत्तमाचार्येण परिशुद्धस्य मनसो ब्रह्मदर्शनसाधनत्वाङ्गीकारात् । तथाच तत्रत्या टीका—

"न चाधिकागमने केवलोपनिषद्वेद्यत्वहानिः शङ्क्या, 'सर्वे वेदा' इति वाक्यस्याप्यौपनिषदत्वेन 'मनसैवानुद्रष्टव्य' इत्युक्तमनोवेद्यत्ववत्सर्ववेद्यत्वस्याप्युपनिषन्मात्रसिद्धत्वात् । एवं च मनसोऽपि श्रुत्युक्तसाधनैः शुद्धत्व एव दर्शनकरणत्वम् ।"

—इति ।

अत्र ब्रह्मणः परिशुद्धमनोग्राह्यत्वमङ्गीकृत्यैव, मनसः परिशुद्धावुपनिषदां तदुपायोपदेशद्वारोपयोगादुपनिषदनुपजीविमानान्तरवेद्यत्वरहितोपनिषद्वेद्यत्वरूपकेवलोपनिषद्वेद्यत्वं समर्थितम् ।

नारदीये भक्तिसूत्रे च—"स कीर्त्यमानः शीघ्रमेवाविर्भवत्यनुभावयति भक्तान्।" इति सूत्रे भगवत आविर्भावः स्पष्टमुक्तः।

तस्माद्धर्मब्रह्मणोरुभयोर्लौकिकेतरशब्दातिरिक्तलौकिकालौकिकप्रमाणासंवेद्यत्वमेतदुक्तमयुक्तमिति सिद्धम्।

यत्तु—"लोके सर्वज्ञस्य सर्वशक्तस्य क्वचिज्जगदाकारेण परिणमतोऽदर्शनात्, प्रोक्षणावहननादीनां यज्ञशेषत्वस्य लोकतोऽवगमाभावाच्च ब्रह्मणः सर्वज्ञस्य सर्वशक्तस्य जगदाकारेण परिणामो न शास्त्रेण प्रतिपादयितुं शक्यते, प्रोक्षणादिदृष्टान्तेन ब्रह्मणि परम्परया वर्तमानस्य परिणामित्वस्य मुख्यत्वसाधनं च न सम्भवति—"

इत्यस्मत्पक्षे दूषणमुक्तम्, तत्—प्रत्यक्षविरुद्धार्थाप्रतिपादकत्वप्रत्यक्षातीतार्थाप्रतिपादकत्वयोरैक्यभ्रान्तिमूलकम्, शास्त्रस्य प्रत्यक्षविरुद्धार्थप्रतिपादकत्वं न सम्भवतीत्येतावदेवोक्तमस्माभिः, न तु प्रत्यक्षातीतार्थप्रतिपादकत्वं न सम्भवतीति। प्रत्यक्षादिप्रमाणातीतमर्थं प्रतिपादयति शास्त्रमिति च सर्ववैदिकसम्मतः सिद्धान्तः। न च ब्रह्मणः सर्वज्ञस्य सर्वशक्तिमतो जगदाकारेण परिणामः प्रत्यक्षविरुद्धः, सर्वज्ञसर्वशक्तब्रह्मविशेष्यकपरिणामाभावतद्व्याप्यादिप्रकारकप्रत्यक्षाभावात्। ब्रह्मणो जगदाकारेण परिणामं वा गुणान्तरं वान्यद्वा किमपि प्रत्यक्षाद्यतीतं प्रतिपादयन्वेदो नान्यत्किमपि प्रमाणं सहायतयाऽपेक्षते। प्रत्यक्षाविरोधश्च काममपेक्ष्यते, तद्विरोधेनार्थप्रतिपादनासम्भवात्। उपजीव्यविरोधेनार्थप्रतिपादनं ह्युपजीवकस्य न सम्भवति। एवं च सति प्रत्यक्षाविरुद्धं ब्रह्मणो जगदाकारेण परिणामं प्रतिपादयितुं शक्नोत्येव वेदः। वैदिकार्थदृष्टान्तेन वैदिकार्थसाधनं च युक्तमेवेति प्रोक्षणादिदृष्टान्तेन परम्परया ब्रह्मणि वर्तमानस्यापि परिणामित्वस्य मुख्यत्वसाधनं च सम्भवत्येवेति न किंचिदत्याहि-

तम् । महाशयेन त्वनेन प्रत्यक्षविरुद्धं न प्रतिपादयति शास्त्रमित्यस्मदुक्तेः प्रत्यक्षातीतमर्थं न प्रतिपादयतीत्यर्थं बुध्यता कोलाहलोऽयं क्रियत इति भ्रान्तेरयं महिमाऽस्येति स्पष्टमवगम्यते ।

**यदपि**—"तत्र तावदिदं पृच्छामः"—

इत्यादिना ब्रह्मणो जगन्निमित्तोपादानत्वादिकं लोकदृष्टप्रक्रिययोपपद्यते न वेति विकल्प्य दूषणम्; तदप्यसङ्गतम्, प्रत्यक्षाविरूद्धार्थप्रतिपादकं शास्त्रमित्यस्मदुक्तोपर्यैतादृशप्रश्नस्यानुत्थानात् । इदं तु ब्रूमः—लोकदृष्टाविरोधिन्या प्रक्रियया सर्वमिदमुपपद्यत इति । न खलु ब्रह्मणो जगन्निमित्तोपादानत्वादिकं लोकविरुद्धम् ? अथोच्येत, लोके चेतनस्य सतः कस्यापि परिणामादर्शनाद्ब्रह्मणः परिणाम्युपादानत्वं लोकदृष्टप्रक्रियाविरुद्धमिति; तन्न, लोकेऽदृष्टत्वमात्रेण लोकविरुद्धत्वासम्भवात् । शरीरद्वारा परिणामस्य लोके दृष्टत्वाच्च । लोकेहि बालशरीरविशिष्टस्यैव कालान्तरे युवशरीरविशिष्टत्वं भवतीति प्रत्यक्षयामः । तत्र युवशरीरविशिष्टं चेतनं प्रति बालशरीरविशिष्टस्योपादानत्वं च सम्भवदुक्तिकम् । तथा—ऊर्णनाभेः शरीरविशिष्टस्य लूतातन्तुसृष्टिसंहारौ प्रत्यक्षसिद्धौ । तत्रोर्णनाभेरेव निमित्तत्वमुपादानत्वं चाभ्युपगम्यते । **"यथोर्णनाभिः सृजते गृह्णते च"** इति श्रुतिरप्यमुमर्थमुदाहरति । तत्र लूतातन्तुस्तच्छरीरपरिणाम एव । ऊर्णनाभेस्तत्र परिणाम्युपादानत्वं दृष्टम् ।

किंच—लोके वर्तमानाः सर्वेऽपि पदार्था नैकेनैकदा वा प्रत्यक्षीक्रियन्ते, विचित्रा च भगवतः सृष्टिः, अनन्ताद्भुताकरेऽत्र संसारे वर्तमानं सर्वमपि नास्माभिः प्रत्यक्षितम् । तस्मान्नेदं वक्तुं शक्यते—केन दृष्टेयं प्रक्रिया इति ।

अनावश्यकं चेदं सर्वमस्माकम्, लोकाविरुद्धया प्रक्रिययोपपादनीयतामात्रस्यैवास्माभिरुक्तेरिति च पूर्वमावेदितम् ।

यत्तु—"अतोऽतीन्द्रियेऽर्थे शास्त्रमेव प्रमाणम्, तदुपबृंहणायैव तर्क उपादेयः, तथाचाह—'आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना। यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः॥' इति, वेदाख्यशास्त्राविरोधिनेत्यर्थः।" इति श्रीभाष्यप्रतीकमुपादाय,

तदिदं मुग्धस्य मनस्तोषमात्रफलं, यदाहुः—'वेदशास्त्राविरोधिने'ति, वस्तुतस्तु तादृशोऽपि तदुपबृंहणोऽपि तर्को न तादृशोऽर्थस्य प्रामाण्यदार्ढ्यमापादयति, किंतु बोधसौलभ्यमेव सम्पादयति।"—

इति दूषणमुपन्यस्तम्, तत्र ब्रूमः—अर्थस्य प्रामाण्यदार्ढ्यमापादयतीत्यस्य कस्तावदर्थो विवक्षितः? प्रामाण्यस्य दार्ढ्यं नाम प्रमाणस्य संशयविपर्ययाद्यसहत्वानाहार्यत्वाप्रामाण्यज्ञानानास्कन्दितत्वादिरूपम्, तच्च प्रमाणनिष्ठं, नार्थनिष्ठम्। एवं च स'त्यर्थस्ये'त्यसङ्गतम्। मीमांसारूपतर्कसाहाय्येनार्थविचारे क्रियमाण एवाप्रामाण्यज्ञानाद्यनास्कन्दितानाहार्यनिश्चयात्मकं ज्ञानं वेदेन जन्यते, यथाश्रुते तु वेदेन जन्यमानं ज्ञानं संशयादिसहमेव भवति; वेदेनानाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयात्मकज्ञानजनने वेदाविरोधिनस्तर्कस्येतिकर्तव्यतारूपत्वात्। तथाचाह कुल्लूकभट्टः—"आर्षं धर्मोपदेशं च" इत्यादि श्लोकव्याख्याने—"ऋषिदृष्टत्वादार्षं—वेदं, धर्मोपदेशं च—तन्मूलं स्मृत्यादिकं, यस्तदविरुद्धेन मीमांसादिन्यायेन विचारयति स धर्मं जानाति, नतु मीमांसानभिज्ञः। धर्मे करणं वेदः, मीमांसा चेतिकर्तव्यतास्थानीया, तदुक्तं भट्टवार्तिककृता—धर्मे प्रमीयमाणे तु वेदेन करणात्मना। इतिकर्तव्यताभागं मीमांसा पूरयिष्यति।"—इति।

अत्र 'स धर्मं जानाती' त्यस्य स धर्मविषयकानाहार्याप्रामाण्यज्ञाना-

नास्कन्दितनिश्चयवानित्यर्थः। अन्यथा वेदादिभिरेव धर्मविषयकज्ञानसम्भवेन 'स धर्मं जानाती' त्यनुपपत्तेः । तथाच वेदेन केवलेन जायमानं ज्ञानं संशयादिसहं भवति, मीमांसायां कृतायां तु तत्-संशयाद्यसहमनाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयरूपं जायत इति भावः । "धर्मे करणं वेदः" इत्यस्य धर्मज्ञाने करणं वेद इत्यर्थः । "इतिकर्तव्यता"— अङ्गम् । तथाच मीमांसारूपाङ्गसहितेन वेदेन धर्मप्रमितिर्जन्यत इति भावः ।

एवं च तर्कस्य प्रामाण्यदार्ढ्योपादकत्वमेव सिद्धं भवति ।

एतन्मतभाष्यकारोऽपि मीमांसाया असन्दिग्धार्थनिश्चये सन्देहवारकत्वेनोपयोगमाह भाष्ये । तथाच प्रथमाध्यायप्रथमाधिकरणभाष्यम्—

"सिद्धान्तस्तु—सन्देहवारकं शास्त्रं बुद्धिदोषात्तदुद्भवः ।
विरुद्धशास्त्रसम्भेदादङ्गैश्चाशक्यनिश्चयः ॥
तस्मात्सूत्रानुसारेण कर्तव्यः सर्वनिर्णयः ।
अन्यथा भ्रश्यते स्वार्थान्मध्यमश्च तथादिमः ॥

परम्परया पाठवदर्थस्यापि गुरुमुखादेव श्रवणेऽपि मन्दमध्यमयोः सन्देहो भवेत्, समानधर्मदर्शनात्, पदादिपाठवत्, तत्र यथा लक्षणानामुपयोग एवमेव मीमांसाया अपि । तदुक्तम्—'असन्दिग्धेऽपि वेदार्थे स्थूणाखननवन्मतः ।
मीमांसानिर्णयः प्राज्ञे दुर्बुद्धेस्तु ततो द्वयम् ॥' इति"—
इति। [ अणुभाष्यम्, अ० १ पा० १ अधि० १ । ]

अत्र च ब्रह्ममीमांसायाः प्रयोजनाभावेनाकर्तव्यत्वपूर्वपक्षे बुद्धिदोषमू-

लकसन्देहवारकत्वात्, निश्चयदार्ढ्यापादकत्वाच्च वेदार्थविचाररूपब्रह्ममीमांसा कर्तव्येति सिद्धान्तः कृतः । स्पष्टीकृतश्चायमर्थष्टीकायाम् ।

"वेदाः श्रीकृष्णवाक्यानि व्याससूत्राणि चैवहि ।
समाधिभाषा व्यासस्य प्रमाणं तच्चतुष्टयम् ॥
उत्तरं पूर्वसन्देहवारकं परिकीर्तितम् ।" ।

इति पूर्वमेतदुदाहृतैतदाचार्यवचनेऽपि मीमांसारूपाणां व्याससूत्राणां सन्देहवारकत्वमुक्तम् । "**आर्षं धर्मोपदेशं चे**"ति वचनोक्तश्च तर्को मीमांसैवेति पूर्वोदाहृतकुल्लूकभट्टव्याख्यानेन स्पष्टम् । किमनेनोक्तं भवति? स्वाचार्यसिद्धान्तं स्ववचनविरोधं च न जानात्ययमिति ।

तथाच मीमांसारूपस्य तर्कस्य संशयापाकरणादिद्वारा प्रामाण्यदार्ढ्यापादकत्वं सुव्यवस्थितम् ।

तर्कस्य बोधसौलभ्यसम्पादकत्वमनेनोक्तम्; तत्र बोधस्य सौलभ्यं नाम सुखेन बोधस्य लाभः । गृहीतपदपदार्थवृत्तेर्व्युत्पन्नस्य बुद्धिप्रतिभादिमतः साङ्गसशिरस्कवेदाध्यायिनः सुखेनैव बोधोदयः स्वयमेव सम्भवति, न तत्र तर्कस्यापेक्षास्ति, उत्पन्नबोधस्यैव च संशयापाकरणाय विचारे प्रवृत्तिरिति तदानीमेव तर्कस्योपयोगः । बुद्धिप्रतिभादिसंवलिताकाङ्क्षादिकारणघटितसामग्र्या बोधसौलभ्यापादकत्वेऽपि तर्कस्य तथात्वमसम्भवि । वेदार्थविशदीकरणरूपवेदोपबृंहणायैव तर्क उपादीयते । तस्मात्सर्वमिदमदसीयं कल्पनाजातं भ्रान्तिमूलकमित्यवसीयते ।

**इति बडवानले प्रथमा ज्वाला ।**

**समाप्तश्चायं पूर्वो भागः ।**



# शुद्धाशुद्धपत्रिका।

| पृष्ठम्। | पङ्क्तिः। | अशुद्धम्। | शुद्धम्। |
|---|---|---|---|
| ३ | ६ | तद्वर्यायेष्येव | तद्वर्यायेष्वेव |
| ,, | १२ | प्रकशितम् | प्रकाशितम् |
| १० | ४ | °श्रत्यर्थ° | °श्रुत्यर्थ° |
| १२ | २ | सुदुर्नीरसो | सुदुर्निरसो |
| १७ | ८ | मातापितुः | मातापितृ |
| १९ | ९ | श्रते | श्रुते |
| ,, | १८ | घूमो | धूमो |
| २२ | ५ | प्रवरे व्रियमाणे | प्रवरे प्रव्रियमाणे |
| २३ | १५ | प्रत्याक्ष | प्रत्यक्ष |
| ,, | १७ | पेटिकाय | पेटिकायां |
| ३० | ७ | इत्यभिहितं | इत्यभिप्रेतं |
| ,, | २२ | वेदवेद्यत्वशब्दघटित | वेदवेद्यत्वघटित |
| ३१ | ५ | निदशस्तु | निर्देशस्तु |
| ३७ | ४ | वक्तव्य भवति | वक्तव्यं भवति |
| ३९ | १७ | व्रह्मणो | ब्रह्मणो |
| ४४ | ९ | नून | नूनं |

---

**सूचना**—प्रथमे भागेत्र खण्ड्यग्रन्थप्रतीकमुपादाय खण्डनं कृतम्, सिद्धापगाया दशद्वादशपृष्ठगता अर्था एव खण्डिताः। सिद्धापगाकारस्य सामर्थ्यमीदृशमिति विदुषां बोधनायैव प्रक्रियेयमत्र समादृता। द्वितीये भागे तु खण्ड्यग्रन्थप्रतीकमनुपादायैव ग्रन्थकृत्सिद्धान्तस्य खण्डनं क्रियेत, अन्यथा ग्रन्थविस्तारो भविष्यतीति।—इति—ग्रन्थकृत्।

---